॥अथजागदीशीसामान्यनिरुक्तिःप्रारभ्यते॥

श्रीगणेशाय नमः॥ अथ सामान्यनिरुक्तेः शिरोमणिना एतावता प्रबंधेन सपरिकरं हेतुं निरूप्य तत्प्रसंगात् तत्त्वनिर्णयादिरूपतत्कार्य्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथे
ति अनुमितीति यथाश्रुतमिदं हेतुदोषाणां लक्षणं तद्धटकत्वञ्च दुष्टहेतूनां तदभिप्रायेणैव उपधेयसंकरेऽपीत्यादि वक्ष्यति तत्रानुमितिपदं अनुमितिनिष्ठकार्य्यतानिरूपकसम्बंधि
त्वेनानुमितितत्कारणज्ञानपरं साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं वा तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद्यास्प
दीज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति। पर्वतो निर्वह्निः धूमो वन्हेरभिधेयत्वं वा मेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमितिप्र
तिबंधादाह यथार्थेति ननु प्रतिबंधकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः। अथ विशिष्टविषयज्ञानं प्रतिबंधकं तद्घटकञ्च न विशिष्टमिति
चेत्तर्हि यथार्थेति व्यर्थं भ्रमे विषयविशिष्टस्याप्रसिद्धत्वादित्यनुशयेनाह। यदिति। केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचा
रादेः प्रतिबंधकत्वमभ्युपेत्य तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषयत्वमग्रे च तत्त्वमित्यस्य तद्वत्त्वमित्यर्थः आद्यस्यैव वा दु
ष्टहेतुलक्षणत्वमिति प्राहुः। लिंगमविवक्षितं यद्विषयत्वेन यादृशविशिष्टविषयत्वेन तेनानुमितिप्रतिबंधकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसं
गः अवच्छेदकञ्चेहानतिरिक्तवृत्तित्वं तेन विशिष्टस्यासत्वेऽपि भ्रमात् प्रतिबंधेऽपि न क्षतिः विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन तेन प्रमेयत्वादिविशिष्टे सव्यभिचा
रादौ नातिप्रसंगः एवञ्च पक्षतावच्छेदकादिविरहविशिष्टः पक्षः पक्षनिष्ठस्तद्विरहो वा साध्याभाववद्वृत्ति साधनं साधनवद्वृत्तिसाध्याभावो वा हेतुदोषः येन केनापि संबन्धेन तद्वा
श्च प्रकृतो हेतुर्दुष्टः यादृशधर्म्मिणि यादृशधर्मवत्ताज्ञानं अनुमितिप्रतिबंधकं तस्य धर्म्मिणस्तादृशधर्मवत्त्वं हेतुदोष इत्यपि कश्चित्। अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन सा
ध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहो ह्रदस्य वह्निधूमशून्यत्वं पर्वतस्य महानसीयवह्निधूमविरहित्वं मेयत्वस्य केवलधूमस्य वा वह्निव्यभिचारो वि
शिष्टस्य धूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वं अतस्तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतु
कानुमितिप्रतिबंधकत्वं वाच्यं तथा च निर्वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणः पर्वतावृत्तेर्वा धर्मादित्यादौ नकोऽपि हेत्वाभासः स्यात् तादृशानुमि
तेरप्रसिद्धत्वादिति अत्र वदन्ति यद्विषयनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरं अनुमितौ अनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकवि
शिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वं
पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं न तु वास्तवं ग्राह्यं व्याप्तिश्चान्वयतो व्यतिरेकतश्च वाच्या तादृशावगाहित्वप्रसिद्धिराहार्यज्ञान एवाभ्युपेतव्या नान्यगतिकत्वा

त् एवञ्च वस्तुमात्रनिश्चयादनन्तरं निर्वह्नित्वाविशिष्टे वह्नेरग्रहेपि न क्षतिस्तस्य विरोध्यविषयकत्वात् एवं साध्यनिश्चयोत्तरं तस्यानुमितावपि मानसज्ञानाविरोधित्वा
त्तादृशि पक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानविरो
धित्वं वा हेतुदोषत्वं ज्ञानविरोधित्वं च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वं एवंविधैव रीतिरुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित्। केचित्तु यादृ
शपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः संभवन्ति तावदन्यान्यत्वमेकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वं स चातिरिक्त एवान्योन्याभाव इति न वैयर्थ्यं पंचविधभे
दोक्तिस्तु तत्संभवस्थलाभिप्रायेण व्यभिचारादेः साध्यादिभेदनियंत्रितत्वात् शब्दाभेदमात्रस्य चाकिंचित्करत्वादिति प्राहुः। स्यादेतत् शब्दो नित्यः शब्दत्वात् इत्यत्रासाधा
रणे व्याप्तिः सर्वसाध्यव्यावृत्तेस्तत्रासत्वात् एवं शब्दोऽनित्यः कृतकत्वात् इत्यस्य सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वृत्ताविरहादित्याशंकां तयोर
लक्ष्यत्वेन निराकुरुते दशाविशेष इति। हेत्वोः सद्धेत्वोः असाधारणः पक्षमात्रवृत्तिः सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा तयोर्दशाविशेषे हेतौ सर्वसाध्यव्यावृ
त्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायामाभासत्वात् अनुमित्यजनकत्वात्तद्धेतुद्धेत्वादौ साध्यव्यावृत्तत्वादिबुद्धेः प्रतिबंधकत्वं परमायाति न तु तद्विषयस्य दोष
त्वम् असत्वात् अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वं स्यात् कोटिसाध्याभावतद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः निर्युक्तिकस्तु प्रवादो न श्रद्धे
यः यत्तु ज्ञानस्य यदनुमितिप्रतिबंधकतावच्छेदकं तद्धत्वं तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः तच्च द्विविधं विषयरूपं साधारण्यादि बाधे च प्रमितसाध्याभाववान् पक्षः त
द्विषयत्वेन ज्ञानस्यानुमितिप्रतिबंधकत्वात् अविषयरूपं च विरोधिसामग्रीकालीनत्वादिकं तद्धत्वञ्च ज्ञानस्येव तद्विषयस्य हेतोरपीति तन्न तद्धत्वं हि हेतोर्नाभेदेन बाधेतद
भावात् अत एव नाश्रयतया वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसंगाच्च साध्याभाववत्पक्षस्यैव साध्याभाववद्धेति हेतोर्ज्ञानस्य प्रतिबंधकत्वात् साधारण्यादिविषय
कत्वस्य ज्ञाननिष्ठस्यैव प्रतिबंधकतावच्छेदकत्वात् सत्तादिसाध्यके ज्ञानेऽतिप्रसंगाच्च यथाकथञ्चित्तद्धत्वस्य चातिप्रसञ्जकत्वात् विरोधिसामग्रीसमवहितोऽपि च लिंगपरा
मर्शो न स्वसाध्यकानुमितेः प्रतिबंधको मणिसमवहितो वह्निरिव दाहस्य अथ यद्धर्मे विशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबंधः तदेवात्र प्रतिबंधकतावच्छेदकमुक्तं भवति च
प्रतिबंधकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे तथा इति चेत् न वैकालादिसाधारणकारणघटितासामग्री क्वापि प्रतिबंधिकाविशेषणतत्त्वत्र तत्सत्त्वे कार्य्योत्पाद
स्य दुर्वारत्वात् किंतु विरोधिपरामर्शस्तथा यदि च तत्सत्त्वेऽपि तत्साध्यबाधावतारान्नानुमितिप्रतिबंधः प्रामाणिकस्तदा अप्रामाण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यं त
त्र निवेश्यतां यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तथा तथाविधबाधादिग्रहेपीत्यतिप्रसंगः। न चातीतादौ लिंगे विरोधिपरामर्शकालीनत्वमपि यदपि

यद्विषयत्वेन ज्ञानस्य अनुमितिप्रतिबंधकत्वं तद्वत्त्वमेव वाच्यं सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसंबंधेन तस्य समूहालंबनरूपतया
हेतुद्वयविषयत्वादिति तदपि तुच्छं साध्याभाववत्पक्षविषयत्वेन तादृशपक्षज्ञानप्रमात्वविषयत्वेन वा ज्ञानस्य प्रतिबंधकत्वं तस्य च साध्यवत्यपि पक्षे संभवादतिव्याप्तेः विशिष्ट
विषयत्वेन प्रतिबंधकत्वं विशिष्टं च तत्राप्रसिद्धमिति चेत्तर्हि किं सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्षः प्रसिद्धः यथाकथंचित् संबंधेन तद्वत्त्वं चातिप्रसक्तं धूमादेरपि ज्ञान
रूपेण तदाश्रयाश्रयत्वादिना वा सम्बंधेन व्यभिचारादिमत्त्वात् यादृशसंबंधावगाहित्वेन ज्ञानस्य प्रतिबंधकत्वं तेन तद्वत्त्वञ्च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेताववि ति
कृतं पल्लवितेन। यद्यपीति स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात्। न चैवं नरशिरःकपालस्य शुचि प्राण्यंगत्वादित्यादिना प्यागमप्रतिरोधः॰
स्यात् तत्रानुकूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानुमितेश्चानुत्पत्तेरिति भावः। यद्धेत्वाद्यभ्युच्चयमात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबंध
कत्वेऽपि शाब्दं प्रति प्रतिबंधकत्वात् योग्यताज्ञाने नान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात्।। ❁ ॥ अथ जागदी
शीसामान्यनिरुक्तिः॥ हेत्वाभासनिरूपणे प्रसंगस्यापि संगतित्वं संभवतीति व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति व्याप्तिपक्षधर्मताविरोधितद्विरहवतो दुष्टहेतोः स्म
रणात्तस्तत्प्रदर्शकमूलस्य न्यूनतां परिजिहीर्षुः प्रसंगस्यापि तन्निरूपणप्रयोजकत्वमाह। एतावतेति परिकरः व्याप्तिपक्षधर्मते निरूप्ये स्यतमुक्तक्रमेण दुष्टहेतोः स्मृतत्व
स्य प्रसंगनिर्वाहकस्य लाभाय तत्प्रसंगादिति सपरिकरहेतुनिरूपितप्रसंगसंगतेरित्यर्थः तज्ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः अन्वयश्चास्य निरूपणेमित्यनेन तत्त्व॰
नि र्णयविजयप्रयोजकत्वादितिमूलं यद्यपि हेत्वाभासनिष्ठतत्त्वनिर्णयादिजनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्त्युपयोगिनिरूपणघटकज्ञानप्रयोजनप्रदर्शनपरं तथापि॰
तन्मात्रपरत्वे संगत्यप्रदर्शनेन मूलस्य न्यूनतास्यादिति तस्यैककार्यकारित्वरूपसंगतिप्रदर्शनपरत्वमपि संभवतीति स्फुटीकर्तुमाह तत्त्वनिर्णयादिति आदिपदाद्विजयपरिग्रहः
तत्कार्यकारित्वात् सपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वात् प्रयोजकत्वं च जनकता वच्छेदकादिसाधारणं स्वविषयकज्ञानकार्यं प्रति स्वस्य तथात्वमक्षतमेवेति तत्त्व
निर्णयः प्रमितिकोटिनिश्चयः तत्र व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानमिव तद्विपरीतकोटिसाधकस्य हेत्वाभासत्वज्ञानमप्युपयुज्यते प्रतिबंधकीभूतविपरीतकोटिव्याप्यवत्ता
ज्ञानाप्रामाण्यग्राहकत्वादित्युभयोस्तत्त्वनिर्णयप्रयोजकत्वं अथवा तत्त्वनिर्णयः साध्यवत्ताज्ञाने प्रमात्वनिश्चयः तत्रानुमापकहेतोर्व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिव
विपरीतकोटिसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते प्रकृतसाध्यग्रहाप्रामाण्यग्राहकविपरीतकोटिसाधकहेत्वदुष्टत्वग्रहविघटनद्वारा विजयप्रयोजकत्वं च हेत्वाभासस्य स्व
ज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसत्यायप्रयोगद्वारा बोध्यं मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वदोषेष्वतिव्याप्तिः यथार्थज्ञाननिष्ठत्वु॰

मितिप्रतिबंधकतावच्छेदकविषयताश्च पत्व पर्यंतस्यसमूहालंबनज्ञानविषयताश्च योदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयत यावांधादिज्ञानप्रतिबंधकतायांप्रायसो
हेतुविषयताया अनवच्छेदकत्वात्तत्रत्यहेताव्याप्तिश्च यद्विषयकत्वेनेत्यादिलक्षणे च तृतीयायाअवच्छेदकत्वार्थतया सुतरां तथेत्यत आह। यथाश्रुतमिति इदमेतल्लक्षण
त्रयं ननु हेतुवदाभासंतइतिव्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वे दुष्टहेतुनिर्णयस्यैव प्रतिज्ञातत्वात्तल्लक्षणमेवाकांक्षितमतस्तदनुक्तौ मूलस्य न्यूनता अन्यविधव्यु
त्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसंभवेपि तेचेत्यादिनादुष्टहेतूनामेव विभजना दुष्टहेतुनिरूपणस्य प्रतिज्ञातत्वेन तदसंगतेः एवं दुष्टहेतुनिरूपणस्याप्रकृतत्वे दुष्टहेतूनां वि
भागानर्हतया तेषां संकरेण विभागव्याघातशंकया अनवतारात् उपधेयसंकरेपीत्यादिग्रंथस्य उपाध्यसंकरेण विभागोपपादानपरस्यासंगतिरित्यत आह तद्वत्त्वे चेति तादृशदो
षवत्त्वे चेत्यर्थः दुष्टहेतूनां लक्षणमित्यनुषज्यते स्फुटमिति शेषः तथा च दुष्टहेतुनिरूपणस्य प्रतिज्ञातत्वेपि दोषलक्षणे कृते दुष्टहेतुलक्षणस्य स्फुटतया लाभे नोक्तानुपपत्तिरि
ति भावः तदभिप्रायेणैवेति दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः अनुमितिपदस्यानुमितिसामान्यपरत्वे संभवात् यत्किंचिदनुमितिपरत्वे तिप्रसंगात् प्रकृतपक्षसाध्यहेतु
कानुमितिपरत्वमावश्यकं तथा च व्यभिचारादावव्याप्तिः वन्हिर्धूमव्यभिचारीइति ज्ञानाभावस्य पर्वतो धूमवान्नित्यनुमित्यजनकत्वात् लक्षणपातस्य प्रकृतानुमितिकार
ण ज्ञानमात्रपरत्वे च बाधादावव्याप्तिः बाधादिज्ञानस्य परामर्शाप्रतिबंधकत्वादतोनुमितिपदमजहत्स्वार्थलक्षणया तदुभयपरतया व्याचष्टे नत्रेति तादृशवाक्यलक्षणइ
त्यर्थः लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाह अनुमितिनिष्ठकार्यतेति अनुमितिपदस्य प्रकृतपक्षतावच्छेदकविशिष्टप्रकृतसाध्यतावच्छेदकावच्छिन्न
प्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति अतो न वक्ष्यमाणातिप्रसंगः निरूपकत्वं चात्र यदि प्रतियोगित्वं तदा कार्यस्य कार्यताप्रतियो
गित्वाभावादनुमित्यसंग्रहः अतः संबंधिपदं संबंधिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभाय अत्र पर्वतो वन्हिमान्हृदश्च तथा
इत्यादिसमूहालंबनानुमित्यादिविरोधिहृदनिष्ठवन्ह्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वन्ह्यादिसाधने दोषताप्रसंगः प्रकृतानुमितिनिष्ठकार्यतानिरूपकसंबंधिग्रा
ह्यत्वस्य प्रतिबध्यतानवच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतानिवेशासंभवात् तथात्वे ग्राह्यत्वव्यापकप्रतिबध्यतानिवेशे चानुमित्यविरोधिनि व्यभि
चारादौ परामर्शविरोधिनि बाधादौ चाव्याप्तिः उभयविरोधिपक्षाप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपकज्ञानविषयत्वसत्त्वादतः कल्पांतरमाह साध्यव्याप्येति प्रकृत
पक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नतद्व्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यपरमित्यर्थः एवं च समूहालंबना
नुमितेर्व्याप्तिविषयकतया व्यभिचारज्ञानादिप्रतिबध्यत्वान्न व्यभिचाराद्यसंग्रहः दर्शितसमूहालंबनादिप्रतिबंधकतामादाया तिप्रसंगस्य वारणाय सामान्यपदं तथा च ता

सा- दृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबंधकताशालियथार्थज्ञानविषयत्वंपर्यवसितार्थः॥अत्रसाध्यतावच्छेदकावच्छिन्नादिप्रकारकानुमितिसामान्यांतर्गतापांप
र्वतोवन्हिमान्वन्हिव्याप्यधूमवांश्चेतिइत्याद्यनुमितौह्रदोनवन्हिमानित्यादिनिश्चयस्याप्रतिबंधकत्वात् बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिष्वव्याप्तिवारणायप्र
३ कृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशः द्रव्यत्वादिनाह्रदादिविशेष्यकानुमितौतशाविधबाधनिश्चयस्या प्रतिबंधकत्वाच्चदोषतादवस्थ्यमतः पक्षतावच्छे
दकावच्छिन्नत्वोपादानं अवच्छेदकत्वंच तत्पर्याप्त्यधिकरणत्वंतेनातेजस्वीपर्वतोवन्हिमानित्यादौविशिष्टपर्वतत्वादिमतिवन्ह्याद्यभावरूपबाधस्यकांचनमयः पर्वतोवन्हि
मानित्यादौचाश्रयासिद्धेः शुद्धपर्वतत्वाद्यवच्छिन्नपक्षकानुमित्यविरोधित्वेपिनासंग्रहः एवमग्रेपिबोध्यं साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वानिवेशेपरामर्शाविरो
धितयाबाधसत्प्रतिपक्षयोरव्याप्तिः तत्रसाध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेपितद्दोषतादवस्थ्यंवन्हित्वावच्छिन्नाभावनिश्चयस्यधूमजनकतेजस्वीवन्हिव्याप्यधूम
वांश्चह्रदइत्याद्यनुमित्यप्रतिबंधकत्वात् यत्तुसाध्याप्रसिद्ध्यवारणप्रयोजनकत्वंतदुपादानस्येतितुनसत् वन्हिर्नोकांचनमयइत्याद्यादिनिर्णयस्यपक्षेवन्हित्वादिनावन्ह्याद्यनु
मित्यविरोधित्वेपिद्वितीयदलेप्रकृतसाध्यतावच्छेदकावच्छिन्नातभावसत्वात्तस्यकांचनमयवन्हिव्याप्यधूमवान्पर्वतइत्यनुमितिविरोधितयातत्रलक्षणसमन्वयात् द्वितीय
दलप्रवेशाद्व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिषुनाव्याप्तिः तत्रापिसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टत्वनिवेशाद्व्यभिचारविरोधयोर्नाव्याप्तिः वन्हिः
धूमव्यभिचारीतिज्ञानदशायामपिद्रव्यत्वादिनाधूमादिनिरूपितव्याप्तिज्ञानसंभवात् तद्दोषतादवस्थ्यमतोव्याप्तौसाध्यतावच्छेदकावच्छिन्नत्वोपादानेअन्वयव्याप्तिव्यतिरे
कव्याप्तीविशेष्योपादायतदुभयविशिष्टहेतुप्रकारत्वमेवनिवेश्यम् एकमात्रव्याप्त्युपादानेसाधारण्यानुपसंहारित्वयोरेकतरासंग्रहप्रसंगात् इत्यग्रेव्यक्तीभविष्यति तादृश
व्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायास्तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वेनानुगमय्यनिवेशनेचनसंभवतिसाध्याभाववद्वृत्तित्वज्ञानदशायां
केवलव्यतिरेकव्याप्त्यादिप्रकारकहेतुमत्वज्ञानोत्पत्यासाधारण्यादेस्तादृशशाल्यनुमितिसामान्यविरोधित्वाभावात् व्याप्तिविशिष्टविषयकत्वमात्रस्यतद्विशिष्टहेतुतावच्छेदका
वच्छिन्नविषयकत्वमात्रस्यवानिवेशेस्वरूपासिद्धावव्याप्तिरतः पक्षांशेतादृशव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशः पक्षांशेव्याप्तिविशिष्टप्रकारकत्व
मात्रनिवेशेपितद्दोषतादवस्थ्यंधूमाभाववान्ह्रदइत्यादिज्ञानस्यद्रव्यत्वादिनाहेतुमत्वज्ञानाविरोधित्वात् साधारण्याद्यव्याप्तिश्चवन्हित्वाद्यवच्छिन्नधूमाभाववद्वृत्तित्वादिग्रह
स्यधूमादिव्याप्तिविशिष्टतत्तद्व्यक्तित्वावच्छिन्नप्रकारकज्ञानाविरोधित्वात् अतोहेतुतावच्छेदकावच्छिन्नत्वनिवेशः पक्षांशेसाध्यादिप्रकारकसंस्कारादेराहार्यज्ञानादेश्च रा
बाधादिज्ञानाप्रतिबध्यत्वादसंभवइत्यतस्तादृशानुमितिव्यापकतानिवेशः साध्यव्याप्यहेतुधर्मितावच्छेदकसाध्यवत्वज्ञानस्यैवसाध्यव्याप्यहेतुमान्पक्षः साध्यवा ३

नित्याकारकतया तादृशाकारलेखनस्वरसात्तादृशहेतुविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यत्वस्य ल
क्षणघटकत्वोपगमे पर्वतत्वावच्छेदेन वन्हेः साध्यत्वे तत्सामानाधिकरण्येन साध्याभावादेरदोषत्वप्रसंगः सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य शुद्धपर्वतत्वावच्छे
देन वन्ह्यादिज्ञानप्रत्येव प्रतिबंधकतया धूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकवन्ह्यादिज्ञानाप्रतिबंधकत्वादिति तदुपेक्षितं नच विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भा
नेपि शुद्धपर्वतत्वावच्छिन्नसंयोगसंबंधादेर्यत्र संसर्गता तत्र पर्वतत्वसामानाधिकरण्येन वन्ह्यभावादिज्ञानस्य प्रतिबंधकत्वमावश्यकं तादृशानुमितेरपि शुद्धपर्वतत्वावच्छेदेन
वन्ह्याद्यवगाहित्वादिति वाच्यं धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते न तु तदेकदेशावच्छिन्नत्व
मपि तद्धर्मावच्छिन्नविशेष्यतानिरूपिततदेकदेशव्यापकत्वावच्छिन्नसंसर्गताया अप्रामाणिकत्वात् अथ लिंगोपधानमते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात्तादृश
संसर्गताभ्युपगम आवश्यकः अन्यथा शुद्धपर्वतत्वावच्छेदेन हेतुमत्त्वज्ञानस्थले हेतुविशिष्टपर्वतत्वावच्छिन्नसंसर्गकानुमितेरनभ्युपगमे पर्वतत्वादिसामानाधिकर
ण्यमात्रावगाहिबाधादिग्रहकालेपि तथाविधसाध्यनिश्चयवतोऽनुमित्यापत्तिः नहि सामानाधिकरण्येन बाधसिद्ध्योः सत्त्वेऽनुमितिं कश्चिदुपैति तादृशबाधादिग्रहस्य क्व
चिदप्यनुमितौ प्रतिबंधकत्वाभावात्तेषां हेत्वाभासताविलोपापत्तिश्चेति चेदेवमपि लिंगानुपधानमते तादृशविषयतायां मानाभाव एव प्रकृतग्रंथस्तु न लिंगोपधानमताभिप्रायकः त
न्मतेऽनुमितेः सर्वत्रैवकारतया तादृशाकरणस्याव्यावर्तकतया अनुमितिपदस्य तादृशानुमितिपरत्वप्रदर्शनासंगतेः केचित्तु लिंगानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्या
ख्याय लिंगोपधानमते यथाश्रुतपरतामाश्रयते साध्यव्याप्येत्यादिना द्रव्याकारानुमितिपरं अनुमितेरित्याकारतामनभिप्रायकमिति व्याचक्षते व्याख्याप्रयोजनं स्फुटयति नेने
ति एकत्र वन्हित्वाद्येकधर्मावच्छिन्ने व्यभिचारादीत्यादिना स्वरूपासिद्धिपरिग्रहः अन्यस्य परामर्शानुद्बुद्धिवन्हित्वादिरूपापरधर्मावच्छिन्ने व्याप्तिपक्षधर्मताद्यवगाहिज्ञानात् व्यभि
चारादिस्तस्यानुमित्यजनकत्वेपीत्यनेन संबंधः यत्र तद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथंचित्तद्रूपावच्छिन्नलिंगकपरामर्शः तत्र क्षणैकविलंबेनानुमित्यु
पगमे व्यभिचाराभावात् न तत्र व्यभिचारो दर्शितः ननु तद्धर्मावच्छिन्नलिंगकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभिचारादिज्ञानाभावस्य हेतुत्वोपगमान्न व्यभिचारः तद्धर्मा
वच्छिन्नलिंगकत्वं च स्वाव्यवहितोत्तरत्वसंबंधेन तद्रूपावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वं तादृशसंबंधेन व्यभिचारज्ञानविशिष्टं यत्तदन्यत्वमेव वा जन्यतावच्छेदकं,
तेन धूमव्याप्यवन्हिमानयमित्याकारकशाब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षादिजन्यो धूमव्यभिचारी वन्हिर्धूमव्याप्यं धनवानित्याकारकसमूहालंब
नग्रहस्तज्जन्यानुमितेरुक्तसंबंधेन वन्हित्वावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वेपि न क्षतिरित्यत आह व्याप्त्यादीति क्रमकारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञाना

भावव्यतिरेकेणानुमितिव्यतिरेकस्यासिद्धत्वादितिभावः व्याप्तिज्ञानादेर्व्यभिचारज्ञनाभावेनान्यथासिद्धत्वशंका प्रागेव निराकृता नक्षतिर्नव्यभिचारादावव्याप्तिः यत्रासद्धे
तुविशेषे तादृशानुमितेरप्रसिद्धिस्तत्र दोषेष्वव्याप्तेर्वक्ष्यमाणतया एतादृशयथाश्रुतव्याख्यायाम निर्भरस्सूचनायवदंतीत्युक्तं पर्वतो वन्हिमान्धूमादित्यादिसद्धेतुस्थलेवाधा
दिभ्रमविषये ऽतिव्याप्तिवारणाय यथार्थपदं सार्थकं यति पर्वतो निर्वन्हिरिति अत्रेति पदस्य त्रितयस्थले संबंधाद्भ्रमत्रयलाभः प्रत्येकभ्रममादाया तिप्रसंगसंभवात्तादृशसं
मूहालंबनभ्रमपर्यन्तानुधावने वैफल्यादिति ध्येयं प्रथमभ्रमो ऽनुमितौ विरोधी अंत्यौ च तज्जनकज्ञाने तथा तयोरपि प्रथमेन्यत्र प्रसिद्धस्य साध्याभाववद्वृत्तित्वस्य धूमाद्यंशे
भ्रमत्वं अंत्ये च प्रमेयत्वाभाववद्वृत्तित्वस्याप्रसिद्ध्या न तद्भ्रमत्वं किंत्वभावांशे अनुयोगिताविशेषसंबंधेन साध्यस्य भ्रमत्वमित्येतादृशविशेषमादृत्य शिष्यव्युत्पादनाय नानेकवि
धभ्रमकथनं इदं त्ववधेयं अभिधेयत्वप्रमेयत्वव्यभिचारी त्यत्र स्वरूपसंबंधावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसंबंधेन प्रमेयत्वभ्रमो वाच्यः प्रतियोगितांशे सा
ध्यतावच्छेदकधर्मावच्छिन्नत्वसाध्यतावच्छेदकसंबंधावच्छिन्नत्वयोः साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकतया तदंशे तदुभयावगाहि व्यभिचारज्ञानस्यैव व्याप्तिज्ञा
नविरोधित्वात् एवं च भेदादौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वप्रसिद्धावपि स्वरूपसंबंधावच्छिन्नतादृशप्रतियोगिकत्वाप्रसिद्ध्या तादृशभ्रमानुपपत्तिः प्रतियोगितांशे
संबंधविशेषाद्यवच्छिन्नत्वस्य भ्रमइत्यपि न युक्तं तस्य संबंधघटकतया तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तिः नच तेन संबंधेन प्रतियोगिताप्रकारक एवात्र भ्रमो विवक्षितः
नतु तदवच्छिन्नप्रतियोगिताकत्वसंसर्गक इति वाच्यं लाघवात् प्रतियोगितासंसर्गकज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकज्ञानस्याकिंचित्करत्वादित्याहुः स्वावच्छिन्न
साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकत्वसंबंधेन साध्यतावच्छेदकवत्त्वमेवाभावस्य साध्याभाववद्वृत्तित्वघटकं लाघवात् एवं च तादृशसंबंधेनाभावांशे सा
ध्यतावच्छेदकप्रकारकव्यभिचारज्ञानस्य व्याप्तिग्रहविरोधितया घटत्वादेः प्रसिद्धेन तादृशसंबंधेन मेयत्वत्वादेरभावांशे भ्रमात्मक एव तथाविधग्रहो विवक्षित इति किंचि
न्नानुपपन्नं अन्ये तु प्रथमे साध्याभाववद्वृत्तित्वज्ञाने विरोधीहेतौ साध्याभाववद्वृत्तित्वरूपव्यभिचारस्य भ्रमः द्वितीये च तदप्रसिद्ध्या व्यापकसामानाधिकरण्यग्रहविरो
धी साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य भ्रमो ऽभिहितः असमानप्रकारकज्ञानस्याविरोधितया द्विविधव्यभिचारसंग्रहाय द्विविधव्याप्
तिविषयकसमूहालंबनज्ञानस्यैव लक्षणे प्रवेश्यत्वात् नच हेतुः साध्यस्य व्यभिचारीत्यतः साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य दु
र्लभतया तदवगाहिज्ञानस्याभिधेयत्वं प्रमेयत्वव्यभिचारीत्याकारकज्ञानेनोपपद्यत इति वाच्यं यतो ऽभाववद्वृत्तित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं द्वयमे राम
मेव हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदार्थः तत्रादिमव्यभिचारपदार्थैकदेशेऽभावांशे ऽनुयोगितारूपषष्ठ्यर्थस्य तत्र प्रकृत्यर्थतावच्छेदकवन्हित्वाद्यवच्छिन्ननिरूपि ५

तत्त्वसंबंधेन प्रकृत्यर्थस्यान्वयः मत्वर्थीयार्थः स्वरूपसंबंधवान् तस्याभेदेन प्रथमान्तार्थेऽन्वयः द्वितीये तत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वित
प्रथमार्थनिरूपितत्वस्यान्वयः षष्ठी प्रकृते स्वत्वमर्थपरतया षष्ठ्यन्तार्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेद
कत्वं तस्य च तद्धितार्थे संबंधिन्येकदेशघटकत्वरूपसंबंधेन संबंधिनश्चाभेदेन प्रथमान्तार्थेऽन्वयः एवं चोक्तवाक्यात्तत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्र
तियोगितावच्छेदकत्वस्यापि लाभात्तत्र तद्वत्तादिभ्रमस्य दर्शिताकारता संभवादित्यपि वदंति भ्रमादिति पंचम्यर्थः प्रयुक्तत्वं तस्य प्रतिबंधपदार्थेऽनुत्पादेऽन्वयः यथा
र्थेति यथार्थपदेन स्वव्यधिकरणप्रकारावच्छिन्नायाविषयताता तन्निरूपिकत्वरूपस्य सर्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किंचिदंशे प्रमात्वेपि न तमादा
य दोष इति भावः अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादावतिप्रसंगवारणेपि असद्धेतुस्थले तादृशप्रमाविषयदोषघटकसाध्यादेः प्रत्ये
कं दोषत्वापत्तिर्दुर्वारैवेति तदर्थप्रकारान्तरानुसरणं च न तत एव पूर्वदोषस्यापि वारणसंभवे यथार्थपदं व्यर्थमिति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाघटितलक्षणान्तरानु
सरणे वीजत्वमाह नन्विति एकदेशस्यापि विशिष्टघटकतया हेत्वाभासपदार्थत्वस्येष्टत्वादाह प्रत्येकमिति प्रत्येकपदार्थपर्याप्तसाध्यतावच्छेदकाद्यवच्छिन्नस्येत्यर्थः हे
त्वाभासत्वापत्तिः हेत्वाभासपदार्थत्वापत्तिः यद्रूपावच्छिन्नज्ञानस्यानुमित्यविरोधित्वं तद्रूपावच्छिन्ने हेत्वाभासव्यवहारस्य तद्रूपावच्छिन्नमात्रज्ञानाद्धेतौ दुष्टत्वव्यव
हारस्यानुदयेनेष्टापत्तिर्न संभवतीति भावः यादृशविशिष्टविषयकत्वं तादृशानुमितिविरोधितानतिरिक्तवृत्तिस्तत्त्वमिति विवक्षया साध्यादीनातिव्याप्तिरित्याशयेनाशंक
ते अथेति विशिष्टविषयकसाध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकमेव तद्घटकं च नादृशविशिष्टघटकप्रत्येकपदार्थविषयकत्वं च न विशिष्टं न तादृशविशिष्टनि
रूपितं तथा च प्रत्येकपदार्थविषयकत्वस्य प्रतिबंधकतापा अतिरिक्तवृत्तित्वान्नातिव्याप्तिरिति भावः व्यर्थमिति यथार्थपदानुपादानेपि सद्धेतुस्थलेऽतिव्याप्तिवा
रणसंभवात् ननु तत्र भ्रमविषयप्रत्येकपदार्थस्योक्तरीत्या वारणेऽपि तद्विषयविशिष्टेतिव्याप्तिरत आह। भ्रमविषयेति अप्रसिद्धत्वादिति तथा चोक्तातिव्याप्तिरिति भावः
केचित्त्विति नन्वस्य दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः तेषामप्यनुमितिविरोधियथार्थज्ञानविषयत्वात् न च ह्रदादिपक्षकवन्ह्यादिसाधकस्थले वन्ह्यभाववत्ह्रदादि
रूपदोषाणामपि दुष्टहेतुत्वमिष्टमेवेति वाच्यं तद्रूपावच्छिन्नपक्षकतद्रूपावच्छिन्नसाध्यकतद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं यदि तद्रूपावच्छिन्नपक्षसा
ध्यहेतुकानुमितिविरोधियथार्थज्ञानविषयत्वमात्रं तदा ह्रदत्वावच्छिन्नपक्षकवन्हित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबंधकप्रमाविषयवन्ह्यभाववद्ध्रदा
दीनां धूमत्वादिना दुष्टत्वाभावादतिव्याप्तिरित्याशंकापरिजिहीर्षुः तादृशाभावप्रतियोगिनां ज्ञानमिति षष्ठीसमासमादृत्य तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयः

सा· ५

त्वमर्थस्याख्यास्यतीति तच्च ज्ञायमानदोषस्य प्रतिबंधकतामतएवसंगच्छते। नस्तन्मतएवालंब्यैवाह तत्रेति तेषु लक्षणेषु मध्ये इत्यर्थः तृतीयलक्षणस्य सर्वमतएवज्ञायमान
दोषप्रतिबंधकतामताभिप्रायकतयादृष्टांतत्वेनोपन्यासः तदर्थश्चेति तान्दोषानादायलक्षणं संगमनीयमितिदर्शयितुं व्यभिचारादय इति ननु तेनरूपेण लक्षणघटकत्वमि
त्यवधेयमेवं च यथार्थपदादानेदुष्टत्वभ्रममादायप्रकृतहेतुभिन्नेऽतिप्रसंग इति यथार्थपदसार्थक्यं यद्यपि पर्वतत्वावच्छिन्नेवन्हित्वावच्छिन्नसाधने धूमत्वाद्यवच्छिन्नोदु
ष्ट इत्यादेः सद्धेतौ दुष्टत्वव्यवहारस्यनापत्तिस्तत्रतत्तत्साध्यपक्षहेतुकानुमितिप्रतिबंधकदोषप्रकारकज्ञानविषयत्वस्यैवप्रसक्ते तव्यत्वात्तादृशानुमितिप्रतिबंधकबाधव्यभिचारा
देरप्रसिद्धत्वात् ह्रदादौ वन्ह्यादिसाधनमादायसर्वत्रैवदुष्टत्वव्यवहार इष्टस्तथापि धूमसाधनेवन्हित्वेनायं दुष्ट इत्यादौ वन्हित्वाद्यवच्छिन्नहेतुकधूमत्वावच्छिन्नसाध्यकानु
मितिप्रतिबंधकदोषप्रकारकज्ञानविषयत्वमत्ययात् वक्ष्यमाणसंबंधावच्छिन्नतादृशानुमितिप्रतिबंधकधूमाभाववद्वृत्तित्वविशिष्टवन्ह्यादिरूपप्रसिद्धदोषप्रकारताशालिभ्रम
मादायरासभादितात्पर्येणापितथाव्यवहारः स्यात् नचतत्रविशेष्येतृतीयान्तार्थवन्हित्ववैशिष्ट्यलाभात्रासभाद्यंशेतद्बाधेनायमतिप्रसंग इति वाच्यं तथासति दोषपदार्थ
घटकानुमितौवन्हित्वावच्छिन्नहेतुकत्वालाभात्तल्लाभानुरोधेनहेतुप्रकारकज्ञानजन्यानुमितिप्रतिबंधकरूपदोषपदार्थघटकहेतौवन्हित्ववैशिष्ट्यरूपस्यतृतीयान्तार्थस्यत
त्प्रकारतायाश्चावच्छिन्नत्वार्थतृतीयांतलभ्यवन्हित्वाद्यवच्छिन्नत्वस्यान्वय इत्यस्यैवोपगंतव्यत्वात् नचविशेष्येवन्हित्वादिधर्मबोधसमभिव्याहारस्थलेदोषार्थकधातोरे
ववन्हित्वावच्छिन्नहेतुकानुमितिप्रतिबंधकोऽर्थः अथवाऽनुमित्यर्थकसाधनशब्दस्यैववन्हित्वावच्छिन्नहेतुकानुमितिरूपविशेषलाक्षणिकत्वं धात्वर्थेऽनुमित्यन्तर्भावेसाध
नपदार्थानन्वयप्रसंगात् तथाचविशेष्यएवतृतीयान्तार्थवैशिष्ट्यान्वयोपगमान्नोक्तातिप्रसंग इति वाच्यमेवमपिवन्हिनाधूमसाधनेरासभोदुष्ट इत्यादिभ्रममादायातिप्रस
ङ्गादिति यथार्थपदसार्थक्यमथवाऽद्वितरभेदानुमापकमेवेदं लक्षणं तथाचपर्वतपक्षकधूमसाध्यकवन्हिहेतुकदुष्टलक्षणस्यतथाविधानुमितिविरोधिव्यभिचारादिभ्रममादाय
सद्धेतौद्वितरभेदव्यभिचारात् यथार्थपदं ज्ञानं चात्रस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्तसंबंधावगाहि ग्राह्यं तेनप्रकृतहेतुभिन्नस्यसंबंधान्तरेणदोषप्रमाविषयत्वेपिना
तिप्रसंगः अग्रेपीदृशसंबंधेनैवतद्वत्त्वं वाच्यं अथज्ञायमानपक्षनिष्ठसाध्याभाववत्त्वादिनाबाधादिदोषाणांप्रतिबंधकतानसंभवतिसाध्याभाववत्त्वादिनापदार्थान्तरस्यैवयत्र
ज्ञानं तत्रदोषाणामज्ञायमानतयाअविरोधित्वेनानुमित्यापत्तेः किंतुज्ञानीयपक्षतावच्छेदकाद्यवच्छिन्नविषयतानिरूपितसाध्याभावत्वाद्यवच्छिन्नविषयतावत्वेनतादृश
विषयतयाज्ञानविशिष्टत्वेनवातच्चस्वरूपं तादृशभ्रमविषयपदार्थान्तरसाधारणमेवेतितेषामेवतादृशभ्रमदशायां विरोधित्वान्नोक्तापत्तिः एवंचसद्धेतूनामपिप्रतिबंधकतावच्
छेदकनिरुक्तविषयताश्रयवन्ह्यभावादिप्रमाविशेष्यत्वादतिव्याप्तिरितिचेन्नयद्रूपावच्छिन्नविषयतासामान्यप्रतिबंधकतावच्छेदकंतद्रूपविशिष्टप्रकारकप्रमाविशे

ष्यत्वमेवविवक्षणीयं ह्रदो वन्हिमान् धूमादित्यादौ तादृशं रूपं ह्रदविशिष्टवन्ह्यभावत्वादिकं ह्रदेवन्हिर्नास्त्यादिज्ञाननिरूपिततद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वा
वच्छिन्नविषयतानिरूपितवन्ह्यभावत्वाद्यवच्छिन्नविषयता त्वेन दोषनिष्ठानुमितिप्रतिबंधकतायामवच्छेदकत्वात् सद्धेतुस्थले च न केवलवन्ह्यभावत्वादिकं तथा
तदवच्छिन्नविषयतासामान्यान्तर्गतधर्म्यविषयकज्ञाननिरूपिततादृशविषयतानामनुमितिप्रतिबंधकतानवच्छेदकत्वात् पर्वतविशिष्टवन्ह्यभावत्वादिविशिष्टं च न किं
चिद्रूपमप्रसिद्धमिति नातिप्रसंगः तृतीयमपि लक्षणमनयैव रीत्या परिष्करणीयमितीदं बोध्यमस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबंधकतामतानाश्रयणेपि यद्रूपावच्छि
न्नपक्षसाध्यहेतुकानुमितिप्रतिबंधकप्रमाविषयतद्धेतुतावच्छेदकवत्त्वं न तद्रूपावच्छिन्नपक्षसाध्यस्थले तेनैव रूपेण दुष्टत्वमित्यर्थकतामुपगम्य यथार्थपदसार्थक्य
मुपपादयितुं शक्यते ननु द्वितीयतृतीयलक्षणयोर्दोषेष्वतिव्याप्तिरव्याप्तिश्च क्वचिद्धेतौ पदत्वेन दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह तत्त्वमित्यस्येति
प्रथममात्रस्य दुष्टहेतुलक्षणत्वेनोपपत्तौ चरमयोर्दोषलक्षणत्वमेवोचितं तत्त्वमित्यस्य यथाश्रुतार्थकत्वादनुरोधात् तस्तथैवाहाद्यस्यैवेति ईदृशव्याख्यायानिर्दोषत्वा
त्वाहुरित्यरुक्तं लिंगज्ञानस्येति लिंगांशनिवेशस्य निष्प्रयोजनकतया तस्याविवक्षितत्वमाह। लिंगमिति यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं तच्चेदमनतिरि
क्तवृत्तित्वरूपमिदानीं निवेश्यते तदासंभवः विशिष्टस्यानतिरिक्ततया वन्ह्यभावविशिष्टह्रदादिदोषविषयकत्वस्य शुद्धह्रदत्वावच्छिन्नविषयकज्ञानेपि सत्त्वेनानुमिति
प्रतिबंधकतातिरिक्तवृत्तित्वादतः स्वरूपसंबंधरूपमेव तद्वाच्यं तथा च पर्वतो वन्हिमानित्याद्यनुमितिप्रतिबंधकभ्रमविषयवन्ह्यभावादावतिव्याप्तिस्तद्विषयकत्वस्या
पि प्रतिबंधकतावच्छेदकत्वात् असंभवभयेन चावच्छेदकतापर्याप्तिनिवेशनासंभवात् अतो यद्विषयकत्वेनेति पदं व्याचष्टे यादृशविशिष्टविषयकत्वेनेति या
दृशविशिष्टविषयकत्वेन यद्रूपावच्छिन्नविषयताकत्वेन एवं च तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमर्थः। व्याख्याप्रयोजनं प्रकाशयति तेनेति यत्प्रकारकत्वेन प्रतिबंधकत्वमि
त्युक्तौ पक्षविशेषणकभ्रममादाय वन्ह्यभावादौ नातिप्रसंगसंभवः। पर्वतादावतिप्रसंगसंभवेपि यत्संबंधावच्छिन्नयन्निष्ठप्रकारकत्वेनानुमितिप्रतिबंधकत्वे तेन संबंधेन त
द्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पर्वतविशेषणकवन्ह्यभावज्ञानस्य विशेषणताविशेषसंबंधावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्वतादिनिष्ठप्रकारताकत्वेन प्र
तिबंधकत्वात् तेन संबंधेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिरूप सद्धेतौ सत्त्वेपि प्रसिद्धधूमादिरूपहेतावसत्त्वात्तत्र दुष्टताव्यवहारापत्तेरयोगदृतितदनुरोधे
न पक्षविशेष्यके त्युक्तं भ्रमपदं निश्चयसामान्यपरं तेन सद्धेत्वादीत्यादिपदग्राह्यसाध्यशून्यपक्षकदुष्टहेतौ अनुमितिप्रतिबंधकप्रमाविषये साध्याभावादेरेव सत्त्वेपि ना
संगतिः नातिप्रसंग इति उक्तव्याख्यानेऽनतिरिक्तवृत्तित्वरूपमेवावच्छेदकत्वं विवक्षणीयं विशेषणीभूतवन्ह्यभावाद्यविषयके शुद्धह्रदत्वादिना वन्ह्यभावविशिष्टह्रदा

दिविषयकज्ञानेवन्ह्यभाववविशिष्टह्रदत्वावच्छिन्नविलक्षणविषयतानिरूपकत्वस्यासत्वेनोक्तासंभवानवकाशात् तथा च केवलवन्ह्यभाववत्वाद्यवच्छिन्नविषयकत्वस्यप्र
तिबंधकतातिरिक्तवृत्तित्वान्नातिप्रसंग इत्यर्थः ननु स्वरूपसंबंधरूपावच्छेदकत्वनिवेशे यम्मेवातिप्रसंगो दुर्वारः अप्रमाण्यज्ञानाभावादिविशिष्टयद्रूपावच्छिन्नविषयक
त्वं निश्चयत्वं प्रतिबंधकतावच्छेदकतापर्याप्त्यधिकरणमित्येतादृशविवक्षया तादृशातिप्रसंगवारणे पुनरसंभवः वन्ह्यभाववत्वादिनाघटाद्यवगाहिनो वन्ह्यभाववान्ह्रद
इत्यादिज्ञानस्यापि प्रतिबंधकतया तत्साधारण्यानुरोधेन वन्हित्वाद्यवच्छिन्नप्रकारतानिरूपिताभाववत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वाद्यवच्छिन्नविशेष्यताकनिश्चय
त्वेनैव प्रतिबंधक        तायावक्तव्यतया वन्ह्यभाववविशिष्टह्रदत्वावच्छिन्नविषयतायाः तादृशप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयतात्वेनावच्छे
दकत्वेपि अप्रमाण्यज्ञानाभावादिविशिष्टवन्ह्यभावविशिष्टह्रदत्वावच्छिन्नविषयताकनिश्चयत्वस्यावच्छेदकतापर्याप्त्यनधिकरणत्वादतः तृतीयाया अनतिरिक्तवृत्ति
त्वरूपावच्छेदकत्वस्फुटयति अवच्छेदकत्वं चेति इह लक्षणेघटकत्वसप्तम्यर्थः नच विशिष्टविषयकत्वस्याप्रतिबंधकसंशयादौ सत्वात्पुनरसंभव इति वाच्यं ज्ञानस्ये
त्यत्र ज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कंदितनिश्चयपरं षष्ठ्यर्थ आधेयत्वं तस्य यद्विषयकत्वेऽन्वयः एवं च तादृशनिश्चयवृत्तित्वविशिष्टयादृशविशिष्टविषयकत्वमनुमिति
प्रतिबंधकतानतिरिक्तवृत्तितादृशत्वस्य विवक्षणीयतया संभवानवकाशात् अनतिरिक्तवृत्तित्वं च स्वव्यापकतत्कत्वं न तु तच्छून्यावृत्तित्वं विशिष्टस्य विशेष्यीभूतविशिष्ट
विषयकत्वानतिरिक्ततया तस्यातिप्रशक्तत्वे विशिष्टे तस्मिन्ननतिप्रशक्तत्वस्य दुर्घटकत्वात् यत्तु प्रतिबंधकताशून्यतादृशनिश्चयावृत्तित्वमेवानतिरिक्तवृत्तित्वमतो नोक्त
रीत्याऽसंभव इति तदसत् तथा सति मूलेपात्तस्य ज्ञानस्येत्यस्य वैयर्थ्यप्रसंगात् ह्रदत्वाद्यवच्छिन्नविषयकयत्किंचित् ज्ञानीयविषयतातन्निरूपकत्वस्य प्रतिबंधकता
शून्यतादृशनिश्चयावृत्तित्वेन शुद्धह्रदत्वाद्यवच्छिन्नेऽतिप्रसंगाच्च अस्मन्मतेऽनुमितिप्रतिबंधकतायास्तादृशनिश्चयवृत्तित्वविशिष्टह्रदत्वाद्यवच्छिन्नविषयकत्वत्वाद्यव
च्छिन्नव्यापकताविरहेणातिप्रसंगानवकाशात् अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान्वन्ह्यभाववा नित्यादिज्ञानस्यापि वन्ह्यभावविशिष्टह्रदत्वावच्छि
न्नविषयकतया तस्य ह्रदो वन्हिमानित्याद्यनुमित्यविरोधितयाऽसंभवः जलवान्वन्हिमानित्यादिस्थलीयदोषासंग्रहेणाविशेषितधर्मावच्छिन्नपक्षादिस्थलीयस्यापि किंचिद्वि
शिष्टतद्घटितदोषासंग्रहेण च पक्षतावच्छेदकाद्यंशेऽन्याप्रकारकत्वनिवेशस्याशक्यत्वात् तादृशविशिष्टाघटकपदार्थाविषयकत्वस्य ज्ञानविशेषणत्वे सर्वमाकाशवदित्यादि
स्थलीयबाधादौ तद्घटकाऽप्रसिद्ध्याऽव्याप्तिः यद्यद्रूपावच्छिन्नस्य यस्य यस्य यादृशविशिष्टघटकतातत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताभिन्नकिंचिदवच्छिन्नविषयताशू
न्यत्वं ज्ञाने निवेश्यं जातित्वाद्यवच्छिन्नस्य ह्रदत्वादेर्नैव वन्ह्यभाववद्ह्रदत्वावच्छिनात्मकदोषघटकतेति जातित्वाद्यवच्छिन्नह्रदत्वादिविषयतातादृशविषयताभिन्नैवतच्छून्य

त्वंचनोक्तज्ञानस्येतिनदोषइत्यपिनसत्। तथासतिह्रदोजात्यभाववानित्यादिस्थलीयबाधादेर्दुःसंग्रहत्वात् जातित्वादिनाह्रदत्वादिरूपधर्मितावच्छेदकावगाहिनोजाति
मान्जातिमानित्यादिज्ञानस्यजातित्वाद्यवच्छिन्नह्रदत्वादिनिष्ठधर्मितावच्छेदकतारूपविषयतायानिरुक्तविषयताभिन्नत्वविरहेणतादृशज्ञानस्यानुमित्यप्रतिबंधकस्य
शून्यत्वात्तेनावारणात् मेवंयद्रूपावच्छिन्नविषयतात्वंतादृशविशिष्ट विषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकंतद्रूपावच्छिन्नविषयताशून्यत्वस्यज्ञानवि
शेषणतयासामंजस्यात् अप्रतिबंधकज्ञानविषयतावच्छेदकजातित्वादिविशेषितह्रदत्वादिघटिततत्तद्रूपावच्छिन्नाविषयतात्वावच्छिन्नाभावस्यदोषात्मकविशिष्टविष
यतासमानाधिकरणत्वात् तज्ज्ञानव्यावृत्तिरितिनिष्कर्षः विशिष्टस्यविशिष्टविषयत्वस्यासत्वेपिवन्ह्यभावत्वादिनाघटाद्यवगाहिनिभ्रमेऽसत्वेपितथाचविशिष्टविषयकं
त्वेनप्रतिबंधकता—नसंभवतीतिभावः भ्रमाप्रतिबंधेपितादृशभ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेपिनक्षतिः नोक्तयुक्त्यापर्याप्तिनिवेशोऽसंभवः तदनिवेशेपूर्वातिप्रसंगोवा
ननुविशिष्टदोषघटकीभूततदेकदेशविषयतायास्वरूपसंबंधरूपावच्छेदकत्वसत्वेपिविशिष्टविषयिता[illegible]मान्यस्यतादृशावच्छेदकत्वस्यविवक्षयाऽतिप्रसंगवारणसंभ
वात् तदेवकथंनविवक्षितमितिनचसामान्यपदस्यव्यापकत्वार्थकतयाप्रतिबंधकतावच्छेदकतायांविशिष्टविषयतात्वव्यापकत्वंप्रवेश्यंतदपेक्षयाप्रतिबंधकतायांविशिष्टवि
षयताव्यापकत्वनिवेशनमेवोचितमितिवाच्यंयतोवन्ह्यभावविशिष्टह्रदादिनिरूपितविषयितायाअनुमित्यप्रतिबंधकसंशयाहार्याप्रामाण्यज्ञानास्कंदितज्ञानसाधारणतया
नुमितिप्रतिबंधकतायास्तद्व्यापकत्वमित्यनाहार्याप्रामाण्यज्ञानानास्कंदितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापकत्वंप्रतिबंधकतायांभवताविवक्षणीयंत
दपेक्षयालाघवेनस्वरूपसंबंधरूपावच्छेदकतायांबाधादिदोषविशिष्टविषयितात्वव्यापकत्वमेवविवक्षितुमुचितंतथासति निश्चयत्वाद्यनिवेशात् समानाकारज्ञानेषुविषयि
ताभेदस्याप्रामाणिकतयासंशयादिज्ञानीयविषयताअपिनिश्चयत्वादिविशिष्टीयतयाप्रतिबंधकतावच्छेदकतयाप्रतिबंधकतावच्छेदकतायांबाधादिरूपदोषनिरूपितविष
यितात्वव्यापकतायाअक्षतत्वात् नचवन्ह्यभाववान्ह्रदोवन्हिमानित्याहार्यज्ञानीयवन्ह्यभावविशिष्टह्रदादिविषयितानानाहार्यज्ञानसाधारणीतादृशाहार्यज्ञानसमानाका
रकानाहार्यज्ञानाप्रसिद्धेः ह्रदोवन्ह्यभाववानित्याद्यनाहार्यज्ञानीयवन्ह्यभावविशिष्टह्रदादिविषयितायावन्ह्यादिप्रकारतानिरूपिततादृशाहार्यज्ञानीयविशिष्टह्रदादिवि
षयिताभिन्नत्वात् तथाचानाहार्यज्ञानवृत्तित्वविशिष्टविषयितायाएवप्रतिबंधकतावच्छेदकतयानदर्शिताहार्यज्ञानीयविषयितासाधारणविशिष्टविषयितात्वव्यापकत्वमि-
तिवाच्यं एवंसत्यनाहार्यज्ञानीयविशिष्टविषयितात्वव्यापकताएवविवक्षणीयत्वात्तावतापिसंशयान्यत्वाप्रामाण्यज्ञानानास्कंदितत्वयोरप्रवेशेनलाघवानपायात् मेवं-
स्वरूपसंबंधरूपावच्छेदकत्वप्रवेशेपाषाणमयत्वाद्यवच्छेदेनवन्ह्यभाववत्तानिश्चयविशिष्टस्यपाषाणमयत्वविशिष्टपक्षादेर्ज्ञानस्यवन्ह्याद्यनुमितिप्रतिबंधकत्वात्तद

वच्छेदकविषयिताकपाषाणमयत्वादिविशिष्टपक्षादावतिव्याप्तेः अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशमते तादृशविशिष्टविषयितायाः पाषाणमयत्वाद्यवच्छेदेनवन्ह्यभा
ववत्तानिश्चयाविशिष्टज्ञानसाधारणतयाअनुमितिप्रतिबंधकतातिरिक्तवृत्तित्वेनातिप्रसंगानवकाशात् नचानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेपिजलाद्यवच्छेदेनवन्ह्य
भाववत्ताघटितस्यवन्ह्यभाववज्जलादिमद्धृत्तिजलादिविशिष्टस्यहृदादिरूपपक्षस्यजलवान्वन्ह्यभाववानित्यादिज्ञानसहितस्यजलवांश्चहृदइत्यादिज्ञानस्यतादृशज्ञान
विशिष्टतादृशज्ञानत्वेनैवप्रतिबंधकतयातादृशप्रतिबंधकताशून्यज्ञानाविषयस्यसत्प्रतिपक्षाद्यनात्मकस्यवारणायज्ञानवैशिष्ट्यानवच्छिन्नत्वस्यप्रतिबंधकतायाम
वश्यंनिवेशनीयतयामन्मतेपितत्रनातिप्रसंगइतिवाच्यं ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्यप्रतिबंधकताविशेषणत्वेप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्ष
रूपसत्प्रतिपक्षाः व्याप्तिः साध्याभावांशेतद्व्यापकताग्रहविशिष्टतद्धेत्ताज्ञानत्वेनस्वतंत्रसाध्याभावधर्मिकतद्व्यापकताग्रहविशिष्टत. द्धेत्ताज्ञानसाधारण्यानुरोधेनाव
श्यक्लृप्तप्रतिबंधकतयैवोपपत्तेः तादृशविशिष्टज्ञानस्यज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतान्तरे मानाभावादुक्तविशिष्टेऽतिप्रसंगस्त्वविवक्षणीयविशिष्टान्तराघटि
तत्वविशेषणेनैववारणीयः नचज्ञानद्वयसाधारणप्रतिबंधकतायाः प्रत्येकज्ञानविषयविशिष्टविषयकत्वंनानतिरिक्तवृत्तित्वरूपावच्छेदकत्ववत् तथाचदर्शितविशिष्ट
घटकस्यप्रत्येकज्ञानविषयस्यननिरुक्तविशिष्टात्मकतेतिनिरुक्तविशिष्टान्तराघटितत्वमुक्तविशिष्टस्याक्षतमेवेतिवाच्यंवक्ष्यमाणविशिष्टान्तराघटितत्वस्यैवयादृश
विशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वंप्रतिबंधकतानतिरिक्तवृत्तितादृशविशिष्टद्वयाघटितत्वेपिविवक्षणीयतयाउक्तविशिष्टवारणसंभवात् न
चैवमुक्तसत्प्रतिपक्षाव्याप्तिस्तस्यप्रतिहेतुव्यापकताविशिष्टसाध्याभावप्रतिहेतुविशिष्टपक्षात्मकनिरुक्तविशिष्टद्वयघटितत्वादितिवाच्यंसत्प्रतिपक्षघटकतादृशविशिष्टद्वयवि
षयताभिन्ननिरुक्तविशिष्टद्वयविषयिताशून्यप्रतीतिविषयत्वस्यविशिष्टद्वयाघटितार्थकत्वात् यत्रसत्पक्षाप्रसिद्धिस्तत्रभिन्नांतमनुपादेयमेवसाध्यादिभेदेनलक्षणभेदात् भ्र
मात्मकज्ञानीयविषयितासाधारणरूपेणैववाप्रतिहेतुव्यापकताविशिष्टसाध्याभावादिविषयितोपादेयानचदर्शितविशिष्टस्यसत्प्रतिपक्षरूपतानस्वीक्रियते अपितुहेतुताव
च्छेदकाघटितसाध्याभावाभाववदवृत्तिमत्पक्षात्मकविशिष्टस्यैवव्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्पक्षस्यैवोक्तरीत्यासंग्रहेहेतुधर्मव्यापकसाध्याभावका
लीनतद्धर्मविशिष्टपक्षादिव्यावृत्तिरप्यशक्यास्यादित्यविशेषणव्यापकताघटितविशिष्टमात्रस्यालक्ष्यतापाएवयुक्तत्वात् तथाचोक्तप्रयासमुपेक्ष्यज्ञानवैशिष्ट्यानवच्छिन्नप्रति
बंधकतानिवेशनमेवोचितमितिवाच्यमेवमपिप्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वघटितस्यमतभेदेनासाधारण्यविरोधरूपस्यविषयितायाः पक्षधर्मिकप्रकृत
हेतुमत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधकतायामेवावच्छेदकत्वात् प्रतिबंधकतायांज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासंभवात् दर्शितातिप्रसंगवारणायचनिरुक्तविशि

ष्टद्वयाघटितत्वस्यैव निवेशनीयत्वात् नच पक्षवृत्तित्वविशेषितप्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यादिरूपं वाच्यं पक्षवृत्तित्वाद्यघटितविशिष्टविष-
यितायाअप्रतिबंधकज्ञानसाधारणतया प्रतिबंधकतानवच्छेदकत्वात् तादृशस्य चासाधारण्यादेः पक्षवृत्तित्वविशिष्टप्रकृतहेतुसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्ट
प्रकृतहेतुरूपनिरुक्तविशिष्टद्वयघटिततया निरुक्तविशिष्टद्वयाघटितत्वनिवेशोपि न संभवतीति वाच्यं पक्षवृत्तित्वाद्यघटितविशिष्टस्यैवासाधारण्यरूपतायाविरोधोपिफल-
तःप्रतिरोध एवतदन्यत्वेनवाविरोधिविशेषणीयमिति पंक्तिव्याख्यानावसरे संपादनीयत्वात् नन्वतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेपि व्यभिचारादिघटितपदार्थांतरे-
ऽतिव्याप्तिः तद्विषयकत्वस्यापि प्रतिबंधकतानतिरिक्तवृत्तित्वात् तत आह विशेषणीयं चेति तादृशलक्षणमिति शेषः तादृशविशिष्टेति अनुमितिप्रतिबंधकतायां यद्रूपाव-
च्छिन्नविषयकत्वमवच्छेदकं तद्रूपावच्छिन्नेसमर्थः व्यभिचारत्वाद्यवच्छिन्नस्य व्यभिचारत्वादिरूपतादृशरूपावच्छिन्नघटितत्वादसंभव इत्यतोंतरेति स्वावच्छिन्नाविषय-
कप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकमतः शुद्धव्यभिचारादेर्मेयत्वविशिष्टव्यभिचाराभिन्नत्वेपि न क्षतिः तदघटितत्वं च तदविषयकप्रतीतिविषयकत्वं च एवं चा-
नुमितिप्रतिबंधकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं तादृशं यत्स्वावच्छिन्नाविषयकप्रतीतिविषय तावच्छेदकं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयता-
वच्छेदकं यत्स्वं तदवच्छिन्नत्वं समुदितार्थः यद्रूपावच्छिन्ने लक्षणं गमनीयं तदेव स्वार्थः भवति हि व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतापेवा-
धात्वादयस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारत्वादीति तदवच्छिन्ने लक्षणसमन्वयः प्रमेयत्वविशिष्टव्यभिचारत्वादेः स्वावच्छिन्नाविषयकप्र-
तीतिविषयतावच्छेदकव्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयकतावच्छेदकत्वाभावान्न तदवच्छिन्नेऽतिव्याप्तिः प्रमेयत्वविशिष्टव्यभिचारादेरपि मेयत्वादिना
व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयत्वात्तद्दोषः स्यादतस्तादृशरूपाश्रयधर्मिणां तदवच्छिन्नाविषयकप्रतीतिविषयत्वेनानिवेश्य स्वमेव तादृशविषयता-
वच्छेदकत्वेन विशेषितं मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य व्यभिचारत्वाद्यवच्छिन्नविषयकप्रतीतेर्दुर्घटत्वात्तद्दोषोऽतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वाव-
च्छिन्नाविषयकत्वनिवेशः स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वस्य तादृशधर्मविशेषणत्वे व्यभिचारत्वादेरपि प्रमेयत्वादिना व्यभिचारत्वाद्यवच्छिन्नाविषय-
कप्रतीतिविषये व्यभिचारादौ वर्तमानत्वादसंभव इत्यतस्तादृशविषयतावच्छेदकत्वेन धर्मो विशेषितः प्रमेयं गगनवद्वाच्यत्वादित्यादौ व्यभिचारत्वाद्यवच्छिन्नावि-
षयकप्रतीतिविषयतावच्छेदकं गगनाभाववन्मेयत्वादि तदाश्रयाविषयकप्रतीत्यप्रसिद्ध्या व्यभिचारादौ तादृशप्रतीतिविषयकत्वस्य दुरुपपादतया व्याप्तिरतस्तदव-
च्छिन्नाविषयकत्वनिवेशः अत्र विशिष्टांतराविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोषतावच्छेदकधर्मे विशेषणत्वापेक्षया ज्ञानस्येत्यत्र ज्ञानपदार्थे तादृशविशिष्टा-

तराविषयकत्वनिवेश एवोचितः एवंच निष्कृष्टवक्ष्यमाणकल्पे यद्विषयकनिश्चयस्येत्यत्र निश्चय एव तन्निवेश्यं लाघवादित्यवधेयम् अथ धूमव्यभिचारिवन्हिमान्धूमवान्वन्हे
रित्यादौ बाधादेर्व्यभिचारादिघटिततया तत्राव्याप्तिः नच यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकं तादृशरूपान्तराघटि
तत्वस्य विवक्षितत्वान्न दोषः व्यभिचारस्योक्तबाधविषयकत्वान्यूनवृत्तिव्याप्तिज्ञानप्रतिबंधकतावच्छेदकविषयताकत्वेपि तादृशप्रतिबंधकतासामान्यान्तर्गतानुमिति
प्रतिबंधकतावच्छेदकविषयताकत्वविरहात्तद्घटितत्वस्याकिंचित्करत्वादितिवाच्यं व्यभिचारत्वादिरूपस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छे
दकविषयतानिरूपकतावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाप्रसिद्ध्याऽसंभवात् मेयत्वविशिष्टव्यभिचारत्वादेरेव तथाविधविषयतानिरूपकतावच्छे
दकत्वात्तस्य व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावात् नच स्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकविषयतानिरूपकता
वच्छेदकः कश्चित्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य एवंभूतं यद्यत्त्वं मेयत्वविशिष्टव्यभिचारत्वादितदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वि
वक्षणीयतया न दोष इति वाच्यं तथासति धूमव्यभिचारिवन्हिमान् धूमवान्वन्हेरित्यादौ बाधत्वाद्यवच्छिन्नघटकतावच्छेदकस्य धूमव्यभिचारिवन्हिमत्वादेः स्वावच्छिन्नावि
षयकप्रतीतिविषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकव्यभिचारत्वकत्वाद्व्याप्तेर्दुर्वारत्वात् न
च स्वावच्छिन्नविषयितावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकीभूतयल्लिंगविद्विषयत्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीति
विषयतावच्छेदकं यत्त्वं तद्रूपावच्छिन्नत्वमेव समुदितलक्षणार्थः मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकीभूतायाः शु
द्धव्यभिचारत्वाद्यवच्छिन्ननिरूपितविषयिताया मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नानिरूपितत्वेन स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य स्वस्मिन्नस
त्वेन मेयत्वविशिष्टव्यभिचारत्वादेः स्वपदेनोपादातुमशक्यत्वात् व्यभिचारत्वादिविशिष्टानिरूपितत्वासंभवात् व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबंधक
तासामान्यावच्छेदिकायाः कस्या अपि विषयताया व्यभिचारत्वादिविशिष्टानिरूपितत्वासंभवात् तादृशविषयताया यादृशधर्मविशिष्टानिरूपितत्वं घटत्वमेयत्वविशिष्टव्य
भिचारत्वादेरेव तादृशत्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतया व्यभिचारत्वादेः स्वपदेनोपादातुं शक्यत्वाच्च न कश्चिद्दोषः अथवा यद्धर्मावच्छिन्नविष
यत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकीभूतविषयितात्वं यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यं तद्धर्मवत्त्वमेव समुदितार्थ इति वाच्यं बाधविशिष्टव्यभिचारत्वाद्यवच्छि
न्नेऽतिप्रसंगात् तादृशधर्मावच्छिन्नविषयकत्वावच्छिन्नबाधज्ञानप्रतिबंधकताया केवलव्यभिचारविषयिता यास्तादृशव्यभिचारज्ञानप्रतिबंधकतायाश्च केवलबाधविषयिताऽ

या अनवच्छेदकत्वेन बाधविशिष्टव्यभिचारत्वाद्यवच्छिन्नविषयि[illegible]ताया एव तथाविधसामान्यावच्छेदकत्वं तस्यास्तादृशविशिष्टनिरूपितत्वस्यावश्यकत्वात् प्रथमकल्पे
स्वपदेन चरमकल्पे च यत्पदेन तस्योपादानसंभवात् अथ वह्न्यभावादिधर्मितावच्छेदकवन्त्यादिप्रकारकबुद्धेरिव धूमव्यभिचारविशिष्टवन्त्यादिधर्मितावच्छेदकधूमव्याप्य
तयावन्त्यादिप्रकारकग्रहस्यानाहार्यस्यासंभवेन तादृशपक्षतावच्छेदकावच्छिन्नपक्षकसमूहालंबनानुमितेरप्रसिद्ध्या तादृशप्रतिबंधकताघटितयथाश्रुतलक्षणस्य
तद्रूपावच्छिन्नपक्षकवन्त्यादिहेतुकदोषाव्याप्तिः स्वपमेव वस्यते इति तदुद्धारणाय यामोवृत्यर्थेति चेत् भवतु तावदेवं तथापि विशेषगुणवद्भिन्नो घटो गुणसामान्य
वद्भिन्न इत्यादौ दर्शितसमूहालंबनानुमितिप्रसिद्ध्या विशेषगुणवद्घटादिरूपाश्रयासिद्धेर्गुणवद्घटादिरूपबाधघटिताया संग्रह आवश्यकः यदि च तत्र घटत्वावच्छे
देन गुणवत्त्वमेव बाध आश्रयासिद्धिस्तु घटत्वसामानाधिकरण्येन घटत्वावच्छेदेन वा विशेषगुणवत्त्वं तस्यां च गुणत्वरूपसामान्यधर्मावच्छिन्ने घटत्वव्यापकता
घटितोक्तबाधस्य न प्रवेशः विशेषवत्त्वेन घटत्वव्यापकतायास्तत्र प्रवेशेपि सामान्यरूपेण व्यापकताया स्तदन्नभावादिति न तादृशासिद्धेः संग्रह इत्युच्यते तदा
विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ द्वितीयादिक्षणावच्छिन्ने घटे विशेषगुणवत्त्वरूपाश्रयासिद्धौ तदवच्छिन्ने घटे गुणवत्त्वरूपबा
धप्रवेशावश्यकत्वाद्यथाश्रुतलक्षणे च तत्संग्रहस्यावश्यकतया उक्तविशेषणदानानुपपत्तिः वस्तुतस्तु अत्र वदन्तीत्यादिनिष्कृष्टकल्पेपि प्रमेयत्वविशिष्टव्यभिचारादि
वारणाय विशिष्टान्तराघटितत्वस्य निवेशनीयतया तन्मते दर्शितबाधसंग्रहो दोष एव एतेन स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नयत्किंचित्प्रतिबंधकतावच्छेदकविष
यिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वसमुदितलक्षणार्थः मेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वतदवच्छिन्नविषयक
त्वावच्छिन्नप्रतिबंधकतावच्छेदकविषयताकशुद्धव्यभिचारादिविषयितात्वस्य तदवच्छिन्ननिरूपितत्वाव्याप्यत्वात् उक्तस्थले विशेषगुणविशिष्टघटादिरूपाश्रया
सिद्ध्यादिविषयकत्वावच्छिन्नविशिष्टपक्षग्रहादिनिरूपितयत्किंचित्प्रतिबंधकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वस्य तादृशाश्रयासिद्ध्यादिनिरूपित
त्वव्याप्यत्वात्तत्र लक्षणसमन्वयः प्रतिबंधकतायां यावत्त्वानिवेशानोक्तरीत्या बाधविशिष्टव्यभिचारादावतिप्रसंगः स्वावच्छिन्नानिरूपितविशिष्टविषयितानवच्छिन्नप्रति
बंधकतावच्छेदकस्वावच्छिन्नविषयिताको यो धर्मस्तद्वत्त्वं समुदितलक्षणार्थः प्रमेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वं तदवच्छिन्नानिरूपितशुद्धव्यभिचारत्वाद्य
वच्छिन्नविषयित्वावच्छिन्नाया मेयप्रतिबंधकतायां तदवच्छिन्नविषयिताभवच्छेदकत्वात् उक्तस्थले चाश्रयासिद्धिविषयिकत्वस्य तदनिरूपितबाधविषयितानवच्छि
न्नाया विशिष्टपक्षग्रहप्रतिबंधकताया तदवच्छेदकत्वात् लक्षणसमन्वय इति परास्तं यद्विषयकनिश्चयस्य निरोधिविषयिताप्रयुक्त इत्यादिनिष्कृष्टकल्पेऽनुमितिप्रतिबंधकता

सा॰ या अघटकत्वात् प्रतिबंधकतायांविशिष्टांतरविषयकत्वानवच्छिन्नत्वविशेषणदानस्यासंभवेनयत्किंचिद्धर्मस्य तादृशपदार्थांतराघटितत्वमेवयत्पदार्थे विशेषणंदेयं अत्र
१ केचित् स्वसजातीयविशिष्टान्तराघटितत्वमेवयत्पदार्थे विशेषणंदेयं साजात्यं चहेत्वाभासविभाजकरूपेणतच्च रूपंबाधत्वव्यभिचारत्वादितेनरूपेणव्यभिचारत्वादेर्न
बाधादिसाजात्यमिति व्यभिचारघटितबाधादौ नाव्याप्तिः नचैवं यद्धूमवह्निध्वंसस्य विरोधिविषयिताप्रयुक्तोभयाभावस्तत्त्वमित्यत्र विरोधिविषयिताप्रयुक्तत्वदलस्य
वैयर्थ्यं घटादेस्तादृशधर्मस्य सजातीयत्वाप्रसिद्ध्यैवानातिप्रसंगादितिवाच्यंस्वसजातीयविशिष्टान्तराघटितत्वस्य तद्विषयकप्रतीतिविषयत्वस्य विवक्षणेन अनुयो
गिनिरूपत्वानन्तर्भावेणपदार्थान्तरातिप्रसंगवारकतया तद्दलसार्थक्यात् नच व्यभिचारविशिष्टमेयत्वादेर्हेत्वाभासत्वविरहाद्धेत्वाभासविभाजकरूपेणसजातीयाप्रसि
द्ध्यातस्यस्वपदेनोपादातुमशक्यत्वात् मेयत्वविशिष्टव्यभिचारत्वादिकमेव स्वपदेनोपादेयम् तस्यशुद्धव्यभिचाराद्यभिन्नतयाव्यभिचारत्वादिरूपहेत्वाभासविभाजक
रूपेणतत्सजातीयप्रसिद्धेरितितद्विषयकप्रतीतिविषयत्वस्यव्यभिचारविशिष्टमेयत्वादौसत्वात्तत्रातिप्रसंग इतिवाच्यं विशिष्टान्तराघटितत्वेनाघटितस्यसाध्यसा
धनग्रहाविरोधिज्ञाननिष्ठविषयितासंबंधेनव्याप्तिग्रहप्रतिबंधकतानतिरिक्तवृत्तित्वादिरूपस्यव्यभिचारादिविभाजकस्यात्रनिवेशात् तादृशरूपस्यव्यभिचारविशिष्टमे
यत्वादिसाधारणत्वादित्याहुस्तन्न व्यभिचारघटितबाधादावपिविशिष्टान्तराघटितत्वाघटितव्यभिचारत्वादिसत्वेनतद्घटकव्यभिचारादेर्व्यभिचारत्वादिनातत्सजातीय
तयातत्संग्रहानुपपत्तेः नचस्ववृत्तियावद्धेत्वाभासविभाजकरूपेणसाजात्यंविवक्षणीयं तथाचबाधादिघटकव्यभिचारादौबाधत्वाद्यसत्वान्नतत्रतादृशबाधादिसजा
तीयत्वमतस्तत्संग्रहसंभव इतिवाच्यं एवंसतिबाधविशिष्टव्यभिचारादौ स्ववृत्तिबाधत्वव्यभिचारत्वादियावद्धर्मेणसजातीयविशिष्टान्तरस्य व्यभिचारविशिष्टबाधादेः प्र
सिद्धावपित द्घटितत्वासंभवेनातिव्याप्तेस्तस्माद्व्यभिचारादिघटितबाधादेः संग्रहप्रकारोऽग्रेदर्शनीयएवाधारणीयः मेयत्वविशिष्टव्यभिचारादौतादृशव्यभिचारत्वा
द्यवच्छिन्नेनातिप्रसंगः नदोषत्वप्रसंगः अत्रमेयत्वविशिष्टव्यभिचारोदोषइत्यादिव्यवहाराभावान्नेष्टापत्तिः संभवतिनचविशिष्टव्यभिचारादेः शुद्धव्यभिचारत्वादि
नादोषत्वस्याक्षततयाउक्तविशेषणदानेपितादृशव्यवहारापत्तिर्दुर्वारैवेति तत्रेष्टापत्तौचव्यर्थविशेषणमितिवाच्यं दोषपदस्य निरुक्तविशेषणावच्छिन्नानुमितिप्रति
बंधकतावच्छेदकस्वावच्छिन्ननिरूपिताकत्वेनान्वयितावच्छेदकधर्मबोधकतायाव्युत्पन्नतयाप्रकृतेचप्रमेयत्वादिविशिष्टव्यभिचारत्वादिरूपस्यान्वयितावच्छे
दकस्योक्तविशेषणविरहेणानतिप्रसंगादितिहृदयं नन्वश्रयासिद्ध्यादिस्थलेपक्षतावच्छेदकाभाववत् पक्षत्वादिकमेवदोषः तस्यैवहेतुनिष्ठतयोद्देशोदुष्टत्वव्यवहारनि राम
र्वाहकत्वात् तादृशधर्मस्य चतादृशाभाववत् पक्षादिरूपतादृशविशिष्टान्तरघटिततयाऽव्याप्तिरित्यताह। एवंचेतिनादृशविशेषणदानेचेत्यर्थः पक्षतावच्छेदकादिति। ९

आदिपदात्साध्यतावच्छेदकादिपरिग्रहः पर्वतादिधर्मिककाञ्चनमयत्वादिविशिष्टबुद्धौ पर्वतः काञ्चनमयत्वाभाववानित्यादिधर्मिविशेष्यकनिश्चयस्येव पर्वते काञ्चनमयत्व-
न्नास्तीत्यादिधर्मिविशेषणकनिश्चयस्यापि विरोधित्वमानुभाविकमतस्तद्विषयस्यापि दोषत्वमाह पक्षनिष्ठइति आधेयतासंबंधेन पक्षविशिष्टइत्यर्थः वाकारः समुच्चये
साधनवद्वृत्तिसाध्याभावइति साधनधर्मिकसाध्याभाववद्वृत्तित्वप्रकारकज्ञानं साधनधर्मिकव्याप्तिज्ञाने प्रतिबंधकं साधनवति साध्याभावइति ज्ञानेपि साधने साध्याभा-
ववद्वृत्तित्वं तुल्यवित्तिवेद्यतया नियतोभासत इत्यभिप्रायेण साधनवति साध्याभावइति तादृशज्ञानस्यासमानविशेष्यकस्य मणिमंत्रादिन्यायेन स्वातंत्र्येण प्रतिबंधकत्व-
मिति प्राचीनमताभिप्रायेणेदं दोषइति ननु पक्षतावच्छेदकाभाववत्पक्षकत्वादिरिति शेषः तथा चालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः ननु पक्षतावच्छेदकाभाववत्पक्षादे-
र्नाहेत्ववृत्तित्वात्कथं हेतौ दुष्टताव्यवहार इत्यत आह येन केनापीति एकज्ञानविषयत्वादिनेत्यादिस्तद्वान् तदवच्छिन्नो दुष्टो दुष्टपदप्रतिपाद्यः तथा च हेतोस्तादृशदोषा-
नधिकरणत्वेन क्षतिः दुष्टइत्यतो सामान्यतः संबंधिन एव निष्ठार्थत्वात् एवं च एकज्ञानविषयत्वादिनावन्ह्यभाववद्ध्रदादिरूपदोषस्य [illegible]मादौ सत्त्वेन पर्वतादौ च वन्ह्यादि
साधने तस्य दुष्टत्वव्यवहारापत्तिर्विषयतायां तद्रूपावच्छिन्नपक्षसाध्यहेतुवाचकपदसमभिव्याहारस्थले दुष्टपदस्य तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबंधक
तावच्छेदकस्वावच्छिन्ननिरूपितविषयताकधर्मावच्छिन्नसंबंधिबोधकत्वव्युत्पत्त्यापूर्वव्यवहारेपि पूर्ववदेव वन्हिना धूमसाधने रासभो दुष्टइत्यादिव्यवहारो निरुक्त-
दोषमात्रस्य दुष्टताव्यवहारविषयतावच्छेदकत्वे दुर्वार इति प्रकृतहेतुतावच्छेदकविशिष्टसंबंधो निष्ठार्थतावच्छेदको वाच्यः एतल्लाभायैव प्रकृतहेतुरित्युक्तं ह्रदेव-
न्हिसाधने धूमो दुष्ट इत्यत्र ह्रदत्वावच्छिन्नपक्षकवन्हित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबंधकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मावच्छि-
न्नसंबंधी धूम इत्यन्वयबोधः तत्र प्रतिबंधकतावच्छेदकस्वावच्छिन्नविषयकधर्मविशिष्ट एव दुष्टधात्वर्थः साधनपदं लक्षणया धूमत्वावच्छिन्नहेतुकानुमितिपरं तत्र ह्रदइति सप्तम्यंता-
र्थह्रदत्वावच्छिन्नपक्षकत्वस्य वन्हेरिति षष्ठ्यंतार्थस्य च वन्हित्वावच्छिन्नसाध्यकत्वस्य चान्वयः तादृशानुमित्यन्वितसप्तम्यंतार्थनिरूपितत्वस्य दुष्टधात्वर्थैकदेशे प्रतिबंधकत्वे-
न्वयः एवं च पर्वते वन्हेस्साधने धूमो दुष्ट इत्यत्र पर्वतत्वावच्छिन्नपक्षकवन्हित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबंधकतावच्छेदकस्वावच्छिन्ननि-
रूपितविषयताकधर्मविशिष्टसंबंधी धूम इत्येव प्रतीयते तादृशधर्मस्याप्रसिद्धएवेति न तथा व्यवहारः पक्षविशेष्यादिकमनन्तर्भाव्य धूमो दुष्टइत्यादिव्यवहारस्तु इष्यतएवे-
ति दिक् साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेव व्यभिचारतया प्रसिद्धेर्न तु तद्विशिष्टसाधनादेरतो न तस्य दोषत्वमिति कश्चित्तद्व्याचष्टे पि लक्षणमन्यथैवान्यथातिप्रसंगात्
तादृशव्याख्यामुपन्यस्यति यादृशेति यद्रूपावच्छिन्नाश्रयकं ज्ञानं ज्ञान[illegible]वच्छिन्नेत्यर्थकं तस्य धर्मिणः तद्धर्मावच्छिन्नस्य तेन संबंधेनेति शेषः तादृशधर्मवत्त्वं साध्य-

नादिविशेषणकसाध्याभाववद्वृत्तित्वादिविशेष्यकज्ञानस्य व्याप्त्यादिज्ञान
प्रतिबंधकत्वेपि साध्याभाववद्वृत्तित्वादेराधेयतासंबंधेन साधनीयत्वादिकं न दोषः साधनादेः साध्याभाववद्वृत्तित्वादिधर्मिताविरहात् अत्राप्यवच्छेदकत्वं पूर्ववत् न स्वरू
पसंबंधविशेषः पक्षतावच्छेदकावच्छिन्ननिष्ठकेवलाभावत्वावच्छिन्नादावतिप्रसंगात् तदवच्छिन्नधर्मिकतदवच्छिन्नवत्ताज्ञानत्वस्यापि प्रतिबंधकतावच्छेदकत्वे ...प्र
विष्टत्वात् अवच्छेदकतापर्याप्तिविवक्षणे च ह्रदत्वावच्छिन्ननिष्ठवन्ह्यभावत्वावच्छिन्नवत्वे व्याप्तिर्यतो वन्हित्वादिनाघटाद्यवगाहिनोपि ह्रदो न वन्हिमानित्यादि...
स्य ह्रदो वन्हिमानित्याद्युक्तमतिप्रतिबंधकत्वं ह्रदत्वावच्छिन्नविशेष्यकवास्तववन्ह्यभावत्वावच्छिन्नप्रकारकनिश्चयत्वेन न प्रतिबंधकता अपितु ह्रदविशेष्यकवन्हित्वा
वच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिश्चयत्वेनैव अतस्तादृशमेव रूपं प्रति अवच्छेदपर्याप्त्यधिकरणं न तु ह्रदत्वावच्छिन्नधर्मिकवन्ह्यभावत्वावच्छिन्नप्रका
रकनिश्चयत्वमिति यद्रूपपदेन वन्ह्यभावत्वाद्युपादाने न संभवतीति पर्वतो वन्ह्यभाववानित्यादौ पर्वतत्वावच्छिन्ननिष्ठवन्हित्वावच्छिन्नवत्वरूपबाधादेरसंग्रहभयेन यद्रूपा
वच्छिन्ने धर्मिणि यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबंधकता तद्रूपविशिष्टे तद्रूपावच्छिन्नविशेषिततद्रूपावच्छिन्नवत्वं दोष इति वि
वक्षाया असंभवात् अत्र साधननिष्ठसाध्याभाववद्वृत्तित्वादेर्विसाध्याभाववद्वृत्तिसाधनादेरपि दोषत्वसत्तिविरहात् एतावानायासो न र्थक इत्यस्वरसः कश्चिदित्यनेन सूचि
तः यथा व्याख्याने यथाश्रुतार्थे निर्वन्हिः पर्वतो वन्हिमानित्यादौ प्रकृतपक्षतावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेरप्रसिध्या व्या
प्ति दर्शयिष्यते तत्र विशेष्यं पक्षतावच्छेदकाद्यप्रवेशेनाप्रसिद्धिरतस्तन्निवेशतप्रयोजनमाह्वा श्चेति पर्वतादेः कांचनमयत्वविरह इत्यादौ सर्वत्र न दोष इति संबध्यते तथा च पक्ष
तावच्छेदकाप्रवेशे पूर्वोक्तयुक्त्या संभववारणाय यत्किंचिद्धर्मावच्छिन्नपक्षसाध्यकानुमितिसामान्यप्रतिबंधकत्वमेव निवेश्यमिति पर्वतो वन्हिमानित्यादौ पर्वतनिष्ठकांचन
मयत्वाभावादावतिप्रसंगस्तस्यापि कांचनमयत्वादिसद्धितपर्वतत्वादिरूपयत्किंचिद्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यप्रतिबंधकज्ञानविषयत्वादिति भावः आ
दिपदं वस्त्वंतरसंग्राहकं प्रकृतानुमित्यविषयपदार्थाभावे तिव्याप्तिं सूचयित्वा तद्विषयसाध्याद्यभावे तां सूचयति ह्रदस्येति ह्रदनिष्ठवन्हिशून्यत्वं धूमशून्यत्वं चेत्यर्थः ह्रदनिष्ठ
साध्याभावे तिव्याप्तिसूचनं च प्रकृतपक्षतावच्छेदकावच्छिन्नप्रकृतपक्षकत्वरूपसमुदायदलस्यैवानिवेशे बोध्यं। महानसीयेति महानसीयवन्ह्यभावो महानसीयधूमाभा
वश्चेत्यर्थः। अत्रातिव्याप्तिसूचनं प्रकृतसाध्यतावच्छेदकप्रकृतहेतुतावच्छेदकयोरप्रवेशे बोध्यं इदमुपलक्षणं साध्यहेतोरनिवेशेपि जलत्वाभावादावतिव्याप्तिर्बोध्या प्र
कृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे पक्षधर्मताज्ञानप्रतिबंधकतामादायातिव्याप्तिं सूचयित्वा व्याप्तिज्ञानप्रतिबंधकतामादायातिव्याप्तिं सूचयति। मेयत्वस्येति॥

वन्हिव्यभिचार इत्यनेनान्वयः अत्रातिव्याप्तिस्तादृशसमुदायदलस्यैवा निवेशे बोध्या प्रकृतहेतुकत्वं निवेश्यपेप्येतद्दोषस्यशक्यवारणतया हेतुतावच्छेदकनिवेशाय आह
केवलधूमस्येति वन्हिशून्यान्तरधूमव्यक्तिव्यावर्तकविशेषणानवच्छिन्नस्येत्यर्थः साध्यतावच्छेदकानिवेशे पूर्वं साध्यवत्ताज्ञानविरोधिन्यतिव्याप्तिर्दर्शिता इदानीं व्यक्तिज्ञान
विरोधिन्यतिव्याप्तिं दर्शयति विशिष्टधूमस्य वा पर्वतीयवन्हिव्यभिचार इति दोषलक्षणद्वयदृष्टलक्षणेपि पक्षतावच्छेदकादि निवेश्य आवश्यकतां दर्शयति नवा तत्संबंधेने
ति तत्र पर्वतत्वावच्छिन्नवन्हित्वावच्छिन्नवन्हिसाधने तस्य विशिष्टधूमत्वावच्छिन्नस्य पक्षो दोषे पक्षतावच्छेदकादेर्यादृशसंबंधेन विशेषणत्वं यत्राभिमतं तत्र तत्संबंधेन तदव
च्छिन्नत्वं निवेश्यमिति सूचयितुं तत्पक्षके स्फुटं पक्षतावच्छेदकादि निवेशे पक्षनिवेशस्याप्रयोजकत्वादिति। वाच्यमिति। तद्रूपावच्छिन्नपक्षसाध्यहेतुकदोषलक्षणेनिवे
शनीयं तथा चेति निर्वन्हिः पर्वतो वन्हिमानित्यत्र च पक्षतावच्छेदकनिर्वन्हित्वविशिष्टपर्वते वन्हिवैशिष्ट्यावगाहित्वमनुमितेर्न संभवति स्वविरोधि धर्मधर्मितावच्छेदकस्वप्र
कारकानाहार्यज्ञानस्यानभ्युपगमात् पर्वतः पर्वतावृत्तिवन्हिमानित्यत्र पर्वतावृत्तित्वरूपसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वानुमितेर्न संभवति स्वस्मिन्स्वावृत्तित्वाव
च्छिन्नप्रकारकानाहार्यज्ञानस्याननुभाविकत्वादेवं पर्वतो वन्हिमान्वन्हिव्यभिचारिण इत्यत्र वन्हिव्यभिचारित्वरूपहेतुतावच्छेदकावच्छिन्ने वन्हिव्याप्यत्ववैशिष्ट्या
वगाहित्वमनुमितौ न संभवति पूर्वोक्तयुक्तेः पर्वतो वन्हिमान्पर्वतावृत्तेरित्यत्र पर्वते पर्वतावृत्तित्वरूपहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वं नानुमितेः संभवति
उक्तयुक्तेरिति यथाविवक्षितानुमित्यप्रसिद्धिप्रयोजकभेदेन नानास्थलेः व्याप्तिकथनं न कोपि हेत्वाभासः स्यादिति तथा चापार्थकत्वरूपनिग्रहस्थानसत्वे न तथा प्रयोक्तु
र्निग्रहोपपत्तावपि निर्वन्हिपर्वते वन्हेः साधने धूमो दुष्ट इत्यादिव्यवहारो दुरुपपाद इति भावः तादृशानुमितेः तथाविवक्षितानुमितेरप्रसिद्धत्वादिति आहार्य्यप रोक्षत्ता
नानुगमादिति भावः। यद्विषयकनिश्चयस्येति यद्रूपावच्छिन्नविषयकनिश्चयेत्यर्थः तदुत्तरपदस्योत्तरकालीनार्थकतया तदुत्तरमिति धातूपस्थाप्यानुमितिरूपक्रियावि
शेषणमतो द्वितीया अग्रिमकल्पे च तादृशज्ञानरूपक्रियाविशेषणमतो ज्ञानपदमपि सार्थकं तत्पदं च तादृशनिश्चयपरामर्शकं उत्तरपदं चाव्यवहितोत्तरकालार्थकं कालाध्व
नोरत्यंतसंयोग इत्यनेन द्वितीयाधिकरणे उत्तरपदस्योत्तरकालपरत्वादिति तु न युक्तं व्यापकत्वात्मकस्यात्यंतसंयोगस्य प्रकृतेऽविवक्षितत्वात् अनुमितौ अनुमितिसामा
न्ये द्वयोर्व्यतिरेक इति संबंधः तत्वं तद्रूपावच्छिन्नत्वं अत्र च तज्ज्ञानानन्तरज्ञाननिष्ठतादृशोभयाभावे तज्ज्ञानीयायाः एव विरोधिविषयितायाः प्रयोजकत्वाद्विरोधिविषयितायां ता
दृशनिश्चयीयत्वकथनं स्वरूपकीर्तनमात्रं न तु लक्षणघटकं तथा च यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्
त्वं तादृशरूपावच्छिन्नत्वं दोषत्वमिति समुदितार्थः वन्ह्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानंतरं ह्रदो वन्हिमान्वन्हिव्याप्यधूमवांश्चेत्याकारकानुमितेः कदाप्य

नुत्पत्त्याघटाद्यनुमितय एव तादृशनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गतास्तासु च ह्रदत्वादिविशिष्टे यह्न्हित्वादिविशिष्टवैशिष्ट्यावगाहित्वं वन्हित्वाद्यवच्छिन्ननिरू
पितव्याप्तिविशिष्टधूमत्वावच्छिन्नवैशिष्ट्यानवगाहित्वं च तदुभयाभाववत्त्वमक्षतमेव तत्र तादृशनिश्चयीयविरोधिविषयिताप्रयुक्तत्वमपि स्वनिष्ठप्रतिबंधकतावच्छेदकध
र्मस्य स्वानन्तरोत्पन्ननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वात् तद्‌त्वविशिष्टविशेष्यकत्वावच्छिन्नवन्हित्वविशिष्टप्रकारिताघटितधर्मावच्छिन्नप्रतिबध्यता
निरूपितप्रतिबंधकतावच्छेदकीभूतायाह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नवन्हित्वावच्छिन्नाभावीयप्रकारितायास्तादृशवन्हित्वावच्छिन्नप्रकारकत्वघटितोभ
याभावे तथात्वात् न च तादृशविशिष्टप्रकारकत्वमात्रं न विपरीतनिश्चयप्रतिबध्यतावच्छेदकमपि तु तद्धि शेषितानाहार्यज्ञानत्वं तत्कथं तत्प्रकारकत्वाभावस्य तथा वि
धविरोधिविषयिताप्रयुक्तत्वमिति वाच्यं विशिष्टाभावप्रयोजकस्य विशेष्यवन्निष्ठविशेषणाभावप्रयोजकत्वात् अनाहार्यज्ञानत्वाश्रयानुमित्यादिनिष्ठतादृशविशिष्टप्रका
रकत्वाभावस्य विरोधिविषयिताप्रयुक्तत्वासत्तेरिति ह्रदो वन्हिमान् धूमादित्यादौ वन्ह्यभावादिविशिष्टह्रदत्वावच्छिन्ने लक्षणसमन्वयः निर्वन्हिः पर्वतो वन्हिमानित्यादौ ता
दृशानुमितेरप्रसिद्धावपि वन्हिमत्पर्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धघटाद्यनुमितिषु अन्यत्र पक्षतावच्छेदकविशिष्टविषयकत्वावच्छिन्नसाध्यता
वच्छेदकविशिष्टप्रकारकत्वघटितोभयाभाववत्त्वमक्षतमेवेति लक्षणसमन्वयः न चाहार्यज्ञानमात्रप्रसिद्धस्य निर्वन्हिपर्वतत्वावच्छिन्नविशेष्यकवन्हिप्रकारकज्ञानत्वस्य
विरोधिविषयकज्ञानप्रतिबध्यतानवच्छेदकतया तादृशधर्मावच्छिन्ने वन्ह्यादिप्रकारकत्वस्याभावे विरोधिविषयताप्रयुक्तत्वमप्रामाणिकमिति वाच्यं तादृशज्ञानत्वस्य
प्रतिबध्यतानवच्छेदकत्वेऽपि तद्व्यापकस्य पर्वतत्वावच्छिन्ने वन्हित्वावच्छिन्नाभावप्रकारकत्वस्यैव वन्हिविशिष्टपर्वतविषयकज्ञानप्रतिबध्यतावच्छेदकतया व्याप
काभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकतया तादृशविशिष्टविशेष्यकत्वावच्छिन्नवन्ह्यादिप्रकारकत्वाभावस्य तादृशदोषविषयताप्रयुक्तत्वस्यावश्यकत्वात् न
च विरोधिज्ञानासत्त्वेऽपि निर्वन्हिः पर्वतो वन्हिमानित्यादिज्ञानस्याहार्यस्यानुत्पत्त्या इच्छाघटिततादृशाहार्यज्ञानसामग्र्यभावस्यैव निर्वन्हित्वविशिष्टे वन्हिवैशिष्ट्यावगा
हित्वाभावप्रयोजकत्वं न तु विरोधिविषयित्वस्य क्वचिद्व्यकुप्तत्वादिति वाच्यम् अभावाधिकरणतायामेव विषयिताप्रयुक्तत्वस्य निवेश्यतया अधिकरणतानां चाभावाभेदेऽप्यधि
करणभेदेन भिन्नतया विरोधिज्ञानानन्तरोत्पन्नज्ञाने तादृशवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिगमनाविरहेण पूर्वज्ञानीयविरोधिविषयितायाअपि प्रयोजक
त्वात् यद्विषयिताप्रयुक्ततादृशोभयाभावस्तत्त्वमित्येतावन्मात्रे कृते ह्रदो वन्ह्यभाववानित्यादिज्ञानीयवन्ह्यभावविशिष्टह्रदविषयितायाएव तदन्तःपातिवन्ह्यभावत्वविशि
ष्टविषयितायाअपि प्रतिबंधकतावच्छेदककोटौ प्रविष्टतया प्रतिबध्यतावच्छेदकस्य ह्रदत्वादिविशिष्टे वन्ह्यादिवैशिष्ट्यावगाहित्वस्य विरहप्रयोजकतया बाधघटकदेशेव

न्वयभावत्वादिरूपविशिष्टेऽतिव्याप्तिरिति यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं निवेशितं न च यादृशविषयितासामान्यप्रयु
क्तस्तादृशोभयाभावस्तत्त्वमित्येव सम्यक् ह्रदत्वादिविषयितासामान्यान्तर्गतायां ह्रद इत्यादिज्ञानीयविषयितायामुभयाभावप्रयोजकत्वासत्त्वादतिव्याप्तेरनवकाशादिति वाच्यं
पाषाणमयो न वह्निमानित्यादिज्ञानविशिष्टस्य पर्वतः पाषाणमय इत्यादिज्ञानस्य पर्वतो वह्निमानित्यादिज्ञानप्रतिबंधकतायाज्ञानभेदेन विषयिताभेदस्याभावात् पाषाणम
यत्वविशिष्टपर्वतादिविषयितासामान्यस्यैवोभयाभावप्रयोजकत्वात् पाषाणमयत्वविशिष्टपर्वताद्यावति व्याप्तेर्दुर्वारत्वात् ह्रदो वन्ह्यभाववानित्यादिह्रदादिविषयकनिश्चयो
त्तरोत्पन्नघटाद्यनुमितौ विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वात्केवलह्रदाद्यावति व्याप्तिरतः सामान्यपदं पूरितं तथा सति ह्रदादिनिश्चयानन्तरोत्पन्नानुमिति सामान्या
न्तरगतायां ह्रद इत्यादिनिश्चयानन्तरजातह्रदो वन्हिमान्वन्हिव्याप्यधूमवांश्चेत्याद्यनुमितौ विरोधिविषयिताप्रयुक्ततादृशोभयाभावासत्त्वान्नातिव्याप्तिः केवलह्रदत्वादि
नावन्ह्यभावविशिष्टह्रदादिविषयकनिश्चयानंतरमुक्तसमूहालंबनानुमित्युत्पत्त्यातादृशविशिष्टस्यापि दोषत्वानुपपत्तिरतो यत्पदं यद्धर्मावच्छिन्नपरतयोपवर्णितं वन्ह्यभा
वविशिष्टह्रदादिविषयकस्य ह्रदो वन्हिमान्नवेति ज्ञानस्यानन्तरं तादृशसमूहालंबनानुमित्युत्पत्त्यात द्दोषतादवस्थ्यमतो निश्चयेति अनाहार्याप्रामाण्यज्ञानानास्कंदितसंशया
न्यज्ञानपरं तेनाहार्याप्रामाण्यज्ञानास्कंदितस्यापि दोषविषयकनिश्चयस्यानन्तरं तादृशानुमित्युत्पत्तावपि न क्षतिः दोषविषयकनिश्चयनाशे सति तदनुमितेरुत्पत्त्या तद्दोषाप
त्तिरतोऽव्यवधाननिवेशः एवं दोषविषयकलौकिकनिश्चयाव्यवहितपूर्वमनुमित्युत्पत्त्यापि तद्दोषाः तदुत्तरेति तत्सामानाधिकरण्यमप्यनुमितौ निवेश्यमतएकस्य बाधनिश्च
यानन्तरमन्यस्यानुमित्युत्पत्तावपि न क्षतिः बाधादिनिश्चयानन्तरं पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यादिप्रकारकस्याहार्यलौकिकस्य च प्रत्यक्षस्यो
त्पत्त्या तादृशज्ञानसामान्यमुपेक्ष्यानुमितिसामान्यनिवेशः सत्साध्यकपक्षकयद्धेतुकयादृशदोषविषयकनिश्चयानन्तरकस्याप्यनुमितिर्न जाता तत्र तादृशानुमितेरप्र
सिद्ध्याऽव्याप्तिरतोऽनुमितिस्थलेऽनाहार्यदोषविशेषाजन्यज्ञाननिवेशपकत्वान्तरमाह नाहार्येति तथा च तादृशानुमितेरप्रसिद्धिर्यत्र तत्र तथाविधमानसोपनीतभानादिक
मादायैव लक्षणं संगमनीयमिति भावः बाधादिनिश्चयानन्तरमाहार्यसाध्यादिप्रकारकप्रत्यक्षोत्पत्त्याऽसंभवोऽव्याप्तिर्वैतत्योऽनाहार्येति शंखो न पीत इत्यादिनिश्चयानन्तरं शंखा
दौ पीतत्वादिप्रकारकस्य दोषविशेषजन्यचाक्षुषादेरुत्पत्त्या शंखः पीतः शंखत्वादित्यादिस्थलीयबाधादावव्याप्तिरतो मानसेति पदं दोषविशेषाजन्यज्ञानपरं तेन नाहं गौर इत्या
दिनिश्चयानन्तरं मिथ्याज्ञानजन्यवासनारूपदोषविशेषजन्यस्यात्मविशेष्यकगौरत्वादिप्रकारकमानसस्योत्पत्तावपि अहं गौर आत्मत्वादित्यादिस्थलीयबाधादौ नाव्याप्तिः ए
तेन यादृशपक्षसाध्यहेतुकस्थले यद्दोषविषयकनिश्चयानन्तरं विरोधिसामग्र्यादिवशेन मानसज्ञानं कदापि न जातं तत्राव्याप्तिरित्यपि निरस्तं तत्राप्यनुमितिशाब्दबोधादिक

सा माद्यलक्षणसमन्वयसंभवात् पक्षतावच्छेदकेत्यादिदलद्वयनिवेशव्यावृत्तिः पूर्वरीत्याबोध्या विरोधिविषयितात्प्रयुक्तत्वनिवेशप्रयोजनं च स्वयमेव वक्ष्यति पत्र विषयविशेषेस
१२ मूहालंबनज्ञानेनजातं तत्र पक्षतावच्छेदकविशिष्टेसाध्यवैशिष्ट्यावगाहित्वविशिष्टसाध्यव्याप्तिविशिष्टवैशिष्ट्यावगाहित्वाभावरूपविशिष्टाभावाप्रसिद्ध्याः व्याप्तिरतोविशिष्ट
भावमुपेक्ष्योभयाभावनिवेशः तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्टविषयकत्वव्यापकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यस्येवसम्यक्त्वेपि यथासन्निवेशनवे
यर्थ्यं ननुकांचनमयः पर्वतो वन्हिमान्धूमादित्यादौ पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्ध्या विशिष्टपक्षे विशिष्टसाध्यादिवैशिष्ट्यावगाहित्वाप्रसिद्धेरित्यत आह पक्षतावच्छेदकेत्
यादि आदिपदात्साध्यतावच्छेदकवैशिष्ट्यादिपरिग्रहः वैज्ञानिकमिति तत्प्रकारेणज्ञायमानत्वरूपमित्यर्थः तथा च पर्वतादेः कांचनमयत्वादिवैशिष्ट्यस्य वास्तविकस्य विरहेपि
तेन रूपेणज्ञायमानत्वमादाय लक्षणसमन्वयः नच ह्रदो नवन्हिमानित्यादिनिश्चयानंतरं जायमाने ह्रदो द्रव्ये जलमयवन्हिमद्वन्हिव्याप्यधूमवच्चेत्याद्याकारकसमूहालंबने ह्रदे
त्वादिनाजायमाने वन्ह्यादिवैशिष्ट्यावगाहित्वसत्वादसंभव इति वाच्यं पक्षतावच्छेदकावच्छिन्नायापक्षनिष्ठविशेष्यतातन्निरूपितायासाध्यतावच्छेदकावच्छिन्नाप्रकारता
याच साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितव्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुप्रकारतातत्प्रतियोगित्वयोरवगाहिता न द्रूपेन विवक्षणात्
विशिष्टविषयाप्रसिद्धावपि पर्वतादंशे कांचनमयत्वावगाहिभ्रमविषयितापव्यधिकरणकांचनमयत्वाद्यवच्छिन्नायाः प्रसिद्ध्या लक्षणसमन्वयात् व्याप्तिप्रकारतास्थाने च निः
रूप्यनिरूपकभावापन्नव्याप्तिघटकतत्तत्पदार्थप्रकारतानिवेशनीया तेन धूमवान्वन्हेरित्यादौ वन्हिव्यापकधूमसामानाधिकरण्यादिरूपव्याप्तेरप्रसिद्धावपिनक्षतिः नन्वत्र व्याप्ति
पदेनान्वयव्याप्तिश्चेदुच्यते तदा व्यतिरेकव्याप्तिज्ञानविरोधिनिसाध्यनिष्ठाभावप्रतियोगित्वादिरूपानुपसंहारित्वे व्याप्तिमत्तादृशज्ञानस्यान्वयव्याप्तिज्ञानाविरोधित्वात् व्यतिरेकव्या
प्तिविवक्षणे च हेतुनिष्ठसाध्याभाववद्वृत्तित्वस्य साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादेर्वा व्याप्तित्वे ज्ञानस्य ग्राह्याभावायनवगाहितया व्यतिरे
कव्याप्तिज्ञानविरोधित्वे मानाभावादत आह व्याप्तिश्चेति अन्वयतः अन्वयनिरूपिता प्रकृतहेतुनिष्ठा प्रकृतसाध्यनिरूपितेति यावत् सा चात्यंतान्योन्याभावभेदेन भिन्ना अव्यभिचरि
तसामानाधिकरण्यव्यापकसामानाधिकरण्यरूपानानाविधैव ग्राह्या अतोऽत्यन्ताभावादिगर्भव्याप्तिज्ञाने अन्योन्याभावादिगर्भव्यभिचारज्ञानस्य व्यापकताज्ञाने साध्याभाववद्वृत्ति
हित्वादिज्ञानस्य च ग्राह्याभावानवगाहितया विरोधित्वेपि न क्षतिः व्यतिरेकतः व्यतिरेकनिरूपिता साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा ग्राह्या व्याप्तिपदेनविवक्षणीया
तथा च तद्व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताप्रतियोगित्वकूटाभावस्य निवेशनीय इति भावः ननु निर्वन्हिपर्वतो वन्हिमानित्यादौ पक्षतावच्छेदकविशिष्टे
साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वमेवाप्रसिद्धमिति कथं लक्षणसमन्वय इत्यत आह तादृशावगाहित्वप्रसिद्धेरिति आहार्यज्ञानएवेति निर्वन्हित्वविशिष्टवन्हिमत्प्रत्यक्ष

जायतामित्याकारकेच्छाजन्यप्रत्यक्षएवेत्यर्थः विरोधिविषयितानिवेशप्रयोजनमाह। एवंचेति। विरोधिविषयिताप्रयुक्तत्वनिवेशनेचेत्यर्थः नक्षतिः ननिर्वह्निः पर्वतोवह्निमानि॰
त्यादौघटादौ॰तिव्याप्तिः तस्यघटादिनिश्चयस्यविरोध्यविषयकत्वात् स्वानंतरानुमितिसामान्यनिष्ठतादृशोभयाभावप्रयोजकविरोधिविषयिताकत्वविरहात् वह्निमत्यत्वेनादि
विषयकसमूहालंबनात्मकघटादिनिश्चयानन्तरतादृशज्ञाननिष्ठतादृशोभयाभाववत्त्वस्य तज्ज्ञानीयविरोधिविषयिताप्रयुक्तत्वेपिघटादिनिश्चयाव्यवहितोत्तरानुमितिसा
मान्यान्तर्गतसमूहालंबनात्मकघटादिनिश्चयाव्यवहितोत्तरानुमितौविरोधिविषयिताप्रयुक्तोभयाभाववत्त्वविरहान्नातिव्याप्तिरितिभावः प्रयोज्यप्रयोजकभावश्चायम॰
नुभवसिद्धः स्वरूपसंबंधविशेषः विरोधिपदप्रयोजनमाह एवमिति अननुमितावपीति नक्षतिः तस्यविरोध्यविषयिकत्वादित्यनुषज्यते नक्षतिः नसाध्यवत्पक्षे॰तिव्याप्तिः विरो
धिविषयितापदेनतादृशोभयाभावप्रतियोगितावच्छेदककोटौयद्रूपावच्छिन्नांशेयद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वंनिविष्टं तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्ना
भावतद्व्याप्यान्यतरविषयितायाःसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयिताबहिर्भूतविषयितात्वाविवक्षितत्वादितिभावः नचसिषा
धयिषाधीनायांसाध्यनिश्चयोत्तरसमूहालंबनानुमितौतादृशोभयाभावसत्त्वात्सिद्धिविषये॰तिप्रसंगएवनास्ति एवंपक्षेसाध्यनिश्चयोत्तरंतदतिरिक्तविषयकसाध्यविधेय
कानुमितेरनुत्पादेपिपक्षांशेसाध्यांशेवा॰धिकावगाहिन्या अनुमितेस्साध्यधर्मितावच्छेदकान्यविधेयकानुमितेस्साध्यावच्छिन्नपक्षविधेयकानुमितेश्चोत्पत्त्यातत्रोभयाभा
वासत्वादपिनातिप्रसंगप्रसक्तिरितिवाच्यं यत्रविषयविशेषसिषाधयिषावलात्सिध्युत्तरंतादृशानुमितिप्रकृतसाध्यसिद्धप्रतिबध्यसाध्यादिविषयकानुमितिश्चकदापिनजा
ततत्रैवातिव्याप्तेः संभवात् द्वितीयकल्पेविषयितामात्रंनिवेश्यंनतुविरोधिविषयितापर्यंतमित्याशयेनाह मानसज्ञानेति साध्यनिश्चयस्येत्यादि मेयत्वविशिष्टव्यभिचारा
दिवारणाययथाश्रुतविशिष्टान्तराघटितत्वनिवेशेउपदर्शितव्यभिचारादिघटितबाधाद्यन्यास्याविशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोज
काभावाधिकरणताकत्वरूपंतादृशविशे ¯ षणेनिवेश्यंमेयत्वविशिष्टव्यभिचारादिविषयिताप्रयोज्यायाउक्तोभयाभावप्रयोजकव्यास्याद्यवगाहित्वाभाववत्तायाःशुद्धव्यभि॰
चारादिविषयिताप्रयोज्यत्वनियमेनमेयत्वविशिष्टव्यभिचारादौविशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वमितिनातिप्रसं
गः उपदर्शितव्यभिचारघटितबाधादिविषयिताप्रयोज्यायाः पक्षेसाध्यावगाहित्वाभावाधिकरणतायास्तद्घटकव्यभिचारादिविषयित्वाप्रयोज्यत्वेनतत्संग्रहः नचविशिष्टपक्षेवि
शिष्टसाध्यवत्ताग्रहप्रतिबंधकतावच्छेदिकायास्तादृशवि ¯ षयितातःपातिव्यभिचारादिविषयितायाअपितादृशबाधादिविषयिताप्रयोज्यायांविशिष्टपक्षेविशिष्टसाध्यवैशिष्ट्या
वगाहित्वाद्यभावाधिकरणतायांप्रयोजकतयातादृशबाधादेरसंग्रहइतिवाच्यंयत्किंचिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशेनतत्संग्रहसंभवात् व्य

सा० भिचारादिविषयिताया बाधादिवि[षयि]तान्तःपातिविषयितामात्रवृत्तिरूपेणैवोपदर्शितसाध्यवत्ताग्रहप्रतिबंधकतावच्छेदकतयातेनैवरूपेण तादृशसाध्यवगाहित्वविरहव
३ त्ताप्रयोजकत्वात् तादृशस्यचरूपस्यबाधादिविषयितानन्तःपाति व्यभिचारादिविषयितासाधारणव्यभिचारादिरूपविशिष्टविषयितात्वाव्यापकत्वात् तद्व्यापकरू
पावच्छिन्नाप्रयोज्यत्वस्योक्तबाधादिविषयिताप्रयोज्योक्तसाध्यावगाहित्वाभाववत्तायामक्षतत्वात् मेयत्वविशिष्टव्यभिचारादिविषयितायां येनरूपेणव्याप्त्यादिग्र
हः प्रतिबंधकतावच्छेदकतातद्रूपेणनिरुक्तविषयितात्वव्यापकेनमेयत्वविशिष्टव्यभिचारादिविषयितान्तः पातिव्यभिचारादिविषयितायांमेयत्वविशिष्टव्यभिचा
रादिविषयिताप्रयोज्यव्याप्त्याद्यवगाहित्वाभाव वत्ताया नियमतः प्रयोजकत्वान्नातिप्रसंगावकाशः बाधसत्प्रतिपक्षादिविषयकज्ञानस्यनानाविधबाधादिविषयक
ज्ञानस्यचानन्तरंजातास्वघटकानुमितौबाधादिविषयिताप्रयोज्यायाःभावाधिकरणतातस्यांविशिष्टान्तरविषयिताप्रयोज्यत्वेऽपिस्वपूर्ववर्त्तिज्ञानीयविरोधिविषयिता
याएवस्वनिष्ठप्रतिबध्यतावच्छेदकाभावाधिकरणताप्रयोजकत्वात् एकैकबाधादिमात्रविषयकज्ञानानन्तरजातज्ञानेयातत्तद्बाधादिविषयिताप्रयोज्यनस्यांविशि
ष्टान्तरविषयित्वाप्रयोज्यतयाबाधादौलक्षणसमन्वयः व्यभिचारादिघटितबाधादिविषयिताप्रयोज्यायादीधीतिकारोक्तोभयाभावाधिकरणतायाव्याप्त्याद्यवगा
हिताविरहप्रयोज्यत्वेनयत्किंचिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नतादृशबाधादिविषयतान्तः पातिव्यभिचारादिविषयताप्रयोज्यत्वनियमात्तत्रतत्सं
ग्रहायतादृशोभयाभावप्रयोजकाभावाधिकरणतापर्यन्तनिवेशः तथासतिदर्शितोभयाभावाधिकरणतायाउक्तरूपावच्छिन्नव्यभिचारादिविषयित्वप्रयोज्यत्वनियमेपि
तादृशोभयाभावाधिकरणताप्रयोजकसाध्यादिमत्तावगाहित्वाभावाधिकरणतायाउक्तरूपावच्छिन्नव्यभिचारादिविषयित्वाप्रयोज्यत्वेनतादृशबाधादेः संग्रहः अथैतादृ
शोभयाभावघटितलक्षणेपिकेवलनिर्वन्हित्वादिपक्षतावच्छेदकवन्ह्यादिसाध्यकस्थलीयनिर्वन्हिनिष्ठवन्ह्यभावरूपबाधादिदोषेऽव्याप्तिः तादृशबाधादिज्ञानस्याप्रतिबं
धतयानद्दोषविषयितायाः प्रतिबंधकतानवच्छेदकतयातथाविधोभयाभावाप्रयोजकत्वात् तस्यदोषत्वानुगमेचतादृशहेतौदुष्टत्वव्यवहारानुपपत्तेः तत्रेष्टापत्तौचनिर्वन्हिः
पर्वतोवन्हिमानित्यादावपितत्संभवेनैतादृशप्रयासवैफल्याच्चनचतत्राभाववान्वन्हिमानित्यनाहार्यज्ञानस्यप्रसिद्ध्यातत्प्रतिबंधकीभूतस्याभाववन्निर्वन्हिरित्यादि
ज्ञानस्यविषयएवदोषइतिवाच्यमभाववत्त्वसामानाधिकरण्येननिर्वन्हित्वग्रहस्यतादृशवन्हिमत्वग्रहाविरोधित्वात् अभाववत्त्वावच्छेदेनवन्ह्यादिमत्ताग्रहविरोधि
त्वेपितादृशवन्ह्यादिमत्ताद्यवगाहित्वस्यवन्ह्यभावादिमत्वरूपपक्षतावच्छेदकविशिष्टसाध्यवैशिष्ट्यत्वाव्यापकतयातदवच्छिन्नप्रतिबंधकतावच्छेदकविषयितायाः
स्तथाविधोभयाभावाप्रयोजकत्वात्तद्विषयस्यदोषत्वानुपपत्तेः अभाववत्त्वावच्छेदेननिर्वन्हित्वग्रहस्यत्रमरूपतयातद्विषयविशिष्टस्यैवाप्रसिद्धेः एवंवन्हिमान्निर्वन्हि

रित्यादिस्थलीयदोषे नितरामव्याप्तिः वन्हिमन्निष्ठवन्हिमत्वादेरेव तत्र दोषत्वसंभवात्तद्धिवयकज्ञानस्य च कस्यचिदपि प्रतिबंधकत्वायोगात् एवं यत्र निर्वन्हिः पर्वतो वन्हिमानि
त्यादौ पर्वतत्वादिसामानाधिकरण्येन वन्ह्यभावादिमत्त्वस्य पक्षतावच्छेदकघटकतातत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यादिमत्त्वं न दोषः विशिष्टपक्षग्रहाद्यविरोधित्वे
नाश्रयासिद्ध्यादिरूपतानुपपत्तेरुक्तरीत्या तल्लक्षणानाक्रान्तत्वाच्च पर्वतत्वावच्छेदेन वन्ह्यादिमत्त्वमप्रसिद्धं वन्हिशून्यपर्वतादेरपि सत्त्वात् नापि पर्वतत्वादिसामानाधिक
रण्येन निर्वन्हिपर्वतत्वावच्छेदे न वा वन्ह्यभावादिमत्त्वरूपबाधादिः तज्ज्ञानस्य पक्षतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वव्यापकविषयिताघटितधर्मावच्छिन्ना
प्रतिबंधकतया तत्र लक्षणगमनायोगात् नापि पर्वतत्वावच्छेदे न वन्ह्यभावादिमत्त्वमप्रसिद्धत्वादिति तत्र न कोपि दोषः स्यात् यत्तु प्रयुक्तत्वं व्यापकत्वं यद्विषयकनिश्चय
निष्ठविरोधिविषयितायां उभयाभावव्याप्यत्वं स्वाश्रयतादृशनिश्चयाव्य वहितोत्तरानुमितित्वसंबंधेन तादृशसंबंधलाभायैव तदुत्तरमनुमिताविष्युक्तं एवं च विरोधि
विषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तादृशोभयाभाव इति पर्यवसितं एवं च निर्वन्हिर्वन्हिमानित्यादिस्थलीयबाधादेर्विषयितायां स्वरूप
संबंधरूपोभयाभावप्रयोजकत्वासंभवेपि निरुक्तोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारकत्वं निविष्टं तद्रूपावच्छिन्नवि
शेष्यकतद्रूपावच्छिन्नाभावव्याप्यान्यतरप्रकारकस्यैव विरोधिविषयकत्वार्थकतया तत्र लक्षणे सुसमन्वयमेव तादृशप्रयोजकत्वस्यानिवेशात् न चैवं तत्रैवस्तु मात्रेऽति
व्याप्तिर्दुर्वारैव तादृशोभयाभावस्य समूहालंबनरूपघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकताया असत्त्वादिति वाच्यं विरोधिविषयितानतिरिक्तवृत्ति
यद्विषयिताशालिनिश्चयस्य निश्चयातेन विवक्षितत्वात् घटादिविषयितायास्तत्र निरुक्तविरोधिविषयितानतिरिक्तवृत्तित्वविरहात् न चैवं विरोधिविषयितानतिरि
क्तवृत्तिर्यदीयविषयिता तत्त्वमित्येतावतैव सामंजस्ये शेषवैयर्थ्यमिति वाच्यं यत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यादेः साध्यता तत्र पर्वतत्वादिसामानाधिकरण्ये
न वन्ह्याद्यभावादिमत्त्वस्य विषयिताया निरुक्तविरोधिविषयितानतिरिक्तवृत्तित्वात्तत्रातिव्याप्तेर्वारकतया शेषसार्थक्यात् तेदुपादाने तादृशवन्ह्यभावादिमत्त्वविष
यकनिश्चयानन्तरं पर्वतत्वादिसामानाधिकरण्येन वन्ह्याद्यनुमित्युत्पत्त्या तादृशानुमि तौ तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति तत्तुच्छं निर्वन्हिः पर्वतो व
न्हिमानित्यादौ यत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यभावादेः पक्षतावच्छेदकघटकतातत्र पर्वतत्वसमानाधिकरण्येन वन्हिमत्त्वस्य विशिष्टपक्षग्रहाविरोधित्वे
नाश्रयासिद्ध्यनात्मकस्य हेत्वाभासांतरताभयेनासंभवदोषभावस्य निरुक्तविरोधिविषयितानतिरिक्तविषयिताकतयाऽतिव्याप्तेः तादृशोभयाभावप्रतियोगितावच्
छेदकगर्भे यद्रूपविशिष्टे येन संबंधेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविशते तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकानुमितित्वावच्छिन्न

प्रतिबध्यतानिरूपितप्रतिबंधकतावच्छेदकत्वरूपविरोधित्वस्य विषयितायानिवेशेतु शेषवैयर्थ्यमुक्तरीत्या निर्वन्हिमानित्यादिस्थलीयदोषेः व्याप्तिश्च यत्तु पक्षतावच्छेदकवि
शिष्टेनिरुक्तसाध्यहेतुवैवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयतेव विरोधिविषयितापदार्थः तथा च यन्निरूपिततादृशविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापकउभयाभा
वस्तत्वमितिसमुदितार्थः निश्चयत्वंच विशेषणविशेष्यतावच्छेदकभावानापन्नविरुद्धकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वंविशेषणविशेष्य तावच्छेदक
भावानापन्नत्वनिवेशान्निर्वन्हिः पर्वतोवन्हिमानित्यादौ पक्षतावच्छेदकविशिष्टसाध्यादिवैशिष्ट्यग्रहस्यैकत्रविरोधिद्वयप्रकारकत्वनियमेपिन तादृशवैशिष्ट्यावगाहिनिः
श्चयाप्रसिद्धिः यदीयविषयितातादृशनिश्चयावृत्तितत्वमित्येतावतिकृते ह्रदोवन्हिव्याप्यधूमवानित्यादौह्रदादिनिष्ठवन्ह्यभावादिमत्वेः तिव्याप्तिः वन्ह्यादिव्याप्यवत्तानिश्च
यस्यापिवन्ह्यादिनिश्चयवत्कार्यसहभावेनवन्ह्यभावादिग्रहविरोधित्वाद्वन्ह्यभावादिमत्वविषयितायास्तादृशनिश्चयावृत्तित्वादितिन शेषवैयर्थ्यमितितदपिनवन्हिव्याप्य
वान्वन्हिव्याप्यव्याप्यवांश्च ह्रदोवन्ह्यभाववानित्येतादृशाहार्यज्ञानोपगमेनवन्ह्यभावादिमत्वविषयितायावन्हिव्याप्यादिमत्वनिश्चयवृत्तिनयोक्तातिव्याप्त्यनवकाशेन शेष
सार्थक्यानुपपत्तेः वन्हिमान् वन्हिव्याप्यवांश्च ह्रदोवन्ह्यभाववानित्येतादृशाहार्यसाध्यादिवैशिष्ट्यनिश्चये ह्रदोवन्हिमानित्यादिस्थलीयबाधादिविषयितासत्वेनासंभव
प्रसंगाच्च वन्ह्यादिरूपधर्मितावच्छेदकानवच्छिन्नवन्ह्यभावादिविशेषितह्रदादिनिरूपितविषयितायाः साध्यादिनिश्चयावृत्तित्वेपि घटादिनिरूपितायाअपिदोषविषयि
त्वावच्छिन्नायाविषयितायाः साध्यादिनिश्चयावृत्तितयाघटादावुदासीनेः तिव्याप्तेर्वारणाययादृशविशिष्टविषयितासामान्यंतादृशनिश्चयावृत्तितादृश विशिष्टनिरूपि
तविषयितायाएव विरोधिविषयितेत्यनेन विवक्षणीयतया अप्रतीकारात् अप्रामान्यवृत्तियदीयविषयितासामान्यंतादृशनिश्चयावृत्तितदीयविषयितायाविवक्षणेननिर्वाहेपि
विरोधियद्विषयिताशालिनिश्चयोत्तरानुमितिसामान्येद्वयोर्व्यतिरेकइत्यनभिधाययद्विषयकनिश्चयस्येत्यादिवक्राभिधानस्यग्रंथकाररीतिविरुद्धत्वात् एतेनविषयिता
याउभयाभावप्रयोजकत्वंतादृशोभयाभावप्रतियोगितावच्छेदकंयद्रूपविशिष्टेयेनसंबंधेनयद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वघटितंतद्रूपावच्छिन्नविशेष्यकतत्संसर्गकत
द्रूपावच्छिन्नप्रकारकत्वविशेषितेनानुमितित्वेनानाहार्यलौकिकसन्निकर्षाद्यजन्यज्ञानत्वेनवा अवच्छिन्नान्तनिरूपितप्रतिबंधकतावच्छेदकत्वंएवंच यादृशविशिष्टवि
षयितानिरुक्ततथाविधोभयाभावप्रयोजकताश्रयस्तादृशत्वमेवलक्षणंविषयित्वादौविरोधित्वादिकथनंतुस्वरूपाख्यानमात्रमितिप्रलपितमप्यनादेयम् निर्वन्हिर्वन्हिमानि
त्यादिस्थलीयदोषस्योक्तयुक्त्यादुःसंग्रहत्वात् अत्रकेचित् केचिदित्यग्रिमकल्पद्वयात्रापिकल्पेदीधीतिकृतोननिर्भरः निर्वन्हिर्वन्हिमानित्यादिस्थलीयदोषासंग्रहेणास्वरस्याग्रि
मकल्पेकेचिदि त्यनेनेवात्रापिकल्पेवदंती त्यनेनसूचितत्वात् निर्भरस्तकेचिदित्यादिकल्पएव अतएवात्रप्रकर्षबोधनायप्राद्युरित्युक्तमिति परे तु घटाभावादिधर्मिताव

च्छेदकवन्ह्यादिज्ञानं प्रति तद्धर्मितावच्छेदकवन्ह्यभावादिमत्ताज्ञानप्रतिबंधकत्वे कल्पनीये धर्मितावच्छेदकभेदेन तदकल्पनाप्रयुक्तलाघवानुरोधेन धर्मितावच्छेदकध
र्मोननिवेश्य अनाहार्यवन्ह्यादिविशिष्टबुद्धित्ववन्ह्यभावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वश्च स्याः सत्त्वैव प्रतिबध्यप्रतिबंधकभावः कल्प्यते एवं च तद्दृश निष्ठस्य
स्वपूर्ववर्त्तिप्रतिबंधकनिरूपितप्रतिबंधकतावच्छेदकसंबंधस्योत्तरवर्त्तिनिष्ठप्रतिबध्यतावच्छेदकसंबंधेन तद्दृशासंबंधित्वप्रतिप्रयोजकतयाव न्ह्यभावादिनिष्ठवन्ह्यभा
वादिप्रकारकज्ञानीयधर्मितावच्छेदकताख्यविषयितायास्तदुत्तरोत्पन्नानाहार्यवन्ह्यादिप्रकारकज्ञानस्य वन्ह्यभावादिधर्मितावच्छेदकत्वविरहप्रयोजकत्वाद्वन्ह्यभावा
दिविशिष्टे वन्ह्यादिवैशिष्ट्यावगाहित्वविरहस्य वन्ह्यभावादिधर्मितावच्छेदक वन्ह्यादिप्रकारकनिश्चयीयविषयिताप्रयुक्तत्वमक्षतमेवेति तादृशनिश्चयविषयस्य दोष
त्वमव्याहतमेवेति न च धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीतज्ञानप्रतिबंधकत्वनिर्वन्हिविशेष्यकवन्हिज्ञानजायतामित्याकारकेच्छाजन्यस्य निर्वन्हिर्वन्हिमान्घटाभाव
वांश्च वन्हिमानित्याशिकाहार्यज्ञानस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकानाक्रांततया घटाभाववान्वन्ह्यभाववानित्यादिनिश्चयकाले तथाविधेच्छासत्त्वे घटाभावविशिष्टविशे
ष्यकवन्हिज्ञानं जायतामित्याकारकेच्छां विनैव तादृशज्ञानापत्तिरिति वाच्यं यतः सामान्यतो वन्ह्यादिज्ञानेच्छाविशिष्टान्यत्वरूपमनाहार्यत्वं न प्रतिबध्यतावच्छेदककोटौ
निवेशनीयं किंत्वाहार्यज्ञानोपपत्त्यर्थं विशेष्यतानिष्ठं यत्त्वविषयतावच्छेदकत्वं तदवच्छेदकतावच्छेदकत्वसंबंधावच्छिन्नप्रतियोगिताकवन्ह्यादिज्ञानेच्छाविरहस्य
स्वास्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणतात द्विशिष्टधर्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसंबंधत्वमुपपतेतादृशेच्छाविरहस्य प्रतिबंधकविशेषणत्वं वा
विशेषणताविशेषधर्मितावच्छेदकताघटितसामानाधिकरण्यसंबंधेनोपगंतव्यमुक्तस्थले च घटाभावादौ नादृशेच्छाविरहस्य सत्त्वान्नोक्तापत्तिरधिकमन्यत्रानुसंधेयमिति
वदंति निर्वन्हिः पर्वतो वन्हिमानित्यादिस्थलीयदोषसाधारण्याय प्रकारांतरेण वर्णयतां केषांचिन्मतमाह। तादृशपक्ष इति पक्षतावच्छेदकविशिष्टपक्ष इत्यर्थः तादृशसाध्येति सा
ध्यतावच्छेदकविशिष्टसाध्येत्यर्थः तादृशहेत्विति हेतुतावच्छेदकविशिष्टहेत्वित्यर्थः ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानमिति योजना ज्ञानं ज्ञानसामान्यं तेन घटादिवि
षयकस्य क्वचित्समूहालंबनस्य तादृशविरोधिबाधादिविषयकत्वेपि नातिप्रसंगः स्वावच्छिन्नविषयकत्वव्यापकतादृशज्ञानविरोधिविषयिताकधर्मवत्त्वमिति फलितार्थः न
न्वविषयितानिष्ठं स्वरूपसंबंधरूपं तादृशज्ञानविषयकग्रहप्रतिबंधकतावच्छेदकत्वात्मकतादृशज्ञानविरोधित्वमेव निवेशनीयं न तु विषयनिष्ठनिर्वाच्यतादृशज्ञानविरोधि
त्वं तस्य च लक्षणत्वसंभवे शेषवैयर्थ्यप्रसंगात् विषयनिष्ठस्य निर्वाच्यतादृशज्ञानविरोधित्वस्यैव तदपेक्षया लघुतया तदेवाह तादृशज्ञानविरोधित्वं वेति तादृशज्ञानविरोधित्वं
वादितादृशज्ञानप्रतिबंधकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वं न तदा पूर्वनिरुक्तयथाश्रुतलक्षणार्थ एव पर्यवसानान्निर्वन्हिः पर्वतो वन्हिमानित्यादिस्थलीयदोषा

ग·सा व्याप्तितादवस्थ्यमिति तन्निर्युक्ति। ज्ञानविरोधित्वं चेति। तद्विषयविषयकेति। तथाच निर्वह्निः पर्वतो वह्निमानित्यादौ ताहशज्ञानविरोधिज्ञानाप्रसिद्ध्यापादितद्विषयविषयक
१५ स्यनिर्वह्निः पर्वत इत्यादिज्ञानस्य प्रतिबन्धकं यद्वह्निमान्पर्वत इत्यादिज्ञानं तद्विषयिताभावाद्वैयर्थ्यवह्निमत्पर्वतादिरूपतत्स्थलीयाश्रयासिद्ध्यादौ लक्षणसमन्वयः। अथ घ
टवद्भूतलादिरूपोदासीनविषयकसंमूहालंबनात्मकपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतद्व्याप्यहेतुप्रकारकज्ञानविषयविषयकघटवद्भूतलादिज्ञानप्रतिबन्ध
कज्ञाने विषयघटाभाववद्भूतलादावतिव्याप्तिः। नच पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यतन्निरूपितव्याप्तिविशिष्टहेतुतावच्छेदकाव
च्छिन्नप्रकारकग्रहत्वव्यापकविषयिताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वनिवेशान्नदोषः घटवद्भूतला
दिविषयितायास्ताहशग्रहत्वाव्यापकत्वादिति वाच्यं यतः पर्वतांशे वह्निमत्त्वावगाहिनो निर्वह्निः पर्वत इत्यादिज्ञानस्य पावह्निप्रकारकत्वाद्यनिरूपितानिर्वह्नित्वा
दिप्रकारतानिरूपितपर्वतादिविषयितासैवानाहार्यत्वविशिष्टतया वह्निमत्पर्वत इत्यादिज्ञानप्रतिबध्यतावच्छेदिका तस्याश्च निर्वह्निः पर्वतो वह्निमानित्याद्याकारका
हार्यज्ञानसाधारण्ये मानाभावः आहार्यज्ञानसामग्र्यास्ताहशविषयिताप्रयोजकत्वासिद्धेर्विपरीतज्ञानाभावघटितायास्ताहशविषयिताप्रयोजकानाहार्यज्ञानसा
मग्र्याश्चाहार्यज्ञानाजनकत्वात् ताहशग्रहव्यापिका वह्निमत्त्वादिप्रकारतानिरूपिता ताहशपर्वतादिविषयता सा च न प्रतिबध्यतावच्छेदिकेति निर्वह्निप्रकारतानिरू
पितपर्वतादिविषयितात्वेन निर्वह्निः पर्वत इत्यादिज्ञानीयविषयिता तथाविधग्रहत्वव्यापिकेति चेत्तर्हि विषयितात्वादिना घटवद्भूतलादिविषयितानामपि तद्व्यापकतयोदा
सीनपदार्थवारणाशक्यमिति मैवं यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारतात्वावच्छिन्नताहशग्रहत्वव्यापकतद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकग्रहत्वाव
च्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयताकधर्मत्वस्य विवक्षणीयतया सर्वसामंजस्यादिति दिक्। अत्रास्वरससूचनाय केचि
दितिस चोक्तयुक्त्या निर्वह्निर्वह्निमानित्यादिस्थले यद्दोषासंग्रहेण न च धर्मितावच्छेदकत्वप्रत्यासत्त्या वह्निप्रकारकज्ञानं प्रति वह्न्यभावज्ञानस्य प्रतिबन्धकत्वाभते निर्वह्नि
वह्निमानित्येताहशसमानविषयकानाहार्यवह्निमानित्याकारकज्ञानप्रतिबन्धकतामादाय लक्षणसमन्वयः संभवतीति वाच्यं ताहशमते अग्रपर्वतो वह्निमानित्या
दौ वह्न्यभाववद्भूतादेर्दोषताप्रसंगात्।। याहशेति। सर्वत्र यद्रूपावच्छिन्नार्थकतावदन्यान्यत्वमिति यत्र याहशपक्षसाध्यहेतुस्थले याहशदोषज्ञानस्य प्रतिबध्यज्ञाने प्र
सिद्धमिति यथा निर्वह्निः पर्वतो वह्निमान्धूमादित्यादौ वह्निविशिष्टपर्वतादिरूपाश्रयासिद्धिधूमाभावविशिष्टस्वरूपासिद्ध्यादीनां ज्ञानस्य तत्र ताहशदोषाणां ग्राह्याभाव
तद्व्याप्यरूपघटकभेदेन विशेषणविशेष्यभावभेदेन च विभिन्नानामननुगमेन विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यग्रहविरोधित्वरूपासिद्धित्वादिनैव तावदन्यान्यत्वघटक

भेदप्रतियोगितया निवेशो न तु वह्निविशिष्टपर्वतत्वनिर्धूमत्वविशिष्टनिर्वह्नित्वादिना प्रयोजनविरहात्। यत्स्थलीयस्य च यादृशदोषविषयकज्ञानस्य प्रतिबध्यज्ञानप्रसि
द्धं यथा निर्वह्निर्वह्निमानित्यादिस्थलीयस्य बाधादेर्ज्ञानस्य तत्र दोषाणामगत्या वन्ह्यभावविशिष्टनिर्वह्नित्ववन्ह्यभावव्याप्यविशिष्टनिर्वह्नित्वनिर्वह्निनिष्ठवन्ह्यभावव
त्वतन्निष्ठवन्ह्यभावव्याप्यत्वादिननुगतरूपेण वनिवेशः। अत्र विशिष्टभिन्नभिन्नत्वस्य शुद्धविशेष्यसाधारणतया सर्वमाकाशवदित्यादावकाशाभावविशिष्टसर्वादि
रूपबाधादिभिन्नत्वस्याप्रसिद्धतया च तत्तद्विशिष्टनिरूपिततद्विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वमेवाभिमतम्। अयं च प्रकारो यादृशपक्षसाध्य
हेतुकस्थले उक्तसमूहालम्बनानुमितेरप्रसिद्धिस्तत्रैवादरणीयः। यत्र तु तत्प्रसिद्धिस्तत्र लाघवाद्यथाश्रुतमूललभ्यलक्षणमेव साधीयः शब्दाभेदस्याकिंचित्करताया
स्वयमेव वक्ष्यमाणत्वादित्यवधेयम्। यत्राचाश्रयासिद्ध्याद्येकविध एव दोषः प्रतिबध्यज्ञानं च प्रसिद्धं महानसत्ववान्पर्वतो वह्निमान् धूमादित्यादौ तत्र विशिष्टपक्षग्र
हविरोधित्वादिरूपाश्रयासिद्धित्वादेरेव दोषसामान्यलक्षणत्वमुचितं न तु महानसत्वाद्यभावविशिष्टपर्वतत्वावच्छिन्नतादृशाभावव्याप्यविशिष्टपर्वतत्वाद्यवच्छि
न्नादिभिन्नभिन्नत्वस्य निरुक्तसमूहालम्बनानुमितिविरोधित्वस्य च गौरवादित्याशयेनाह एकमात्रदोषस्थल इति। एकविध एव यत्र दोषस्तद्विषयकज्ञानप्रतिबध्यज्ञा
नेन च प्रसिद्धं तादृशस्थल इत्यर्थः। तेन व्याप्त्यभाववत्त्वव्याप्यभेदेन विशेषणविशेष्यभावभेदेन च सर्वदोषाणां नानात्वसंभवादेकमात्रदोषस्थलस्याप्रसिद्धत्वेऽपि पर्वतान्यः
पर्वतो वह्निमान् धूमादित्यादावेकमात्रदोषस्थले च व्याप्त्यभाववत्त्वव्याप्यरूपघटकादिभेदेन विभिन्नाश्रयासिद्ध्यादीनामनुगमकरूपाभावेन तावदन्यान्यत्वस्य लक्षणत्वा
वश्यकत्वे च न क्षतिः तत्र त[illegible]त्वं निरुक्ताश्रयासिद्धित्वादिकमित्यावत्॥ इदमुपलक्षणं यत्र परामर्शविरोधिनो व्यभिचारविरोधासिद्धयस्त्रयो दोषा न तु बाधप्रतिरो
धौ पर्वतो वह्निमान् [illegible]दित्यादौ [illegible] परामर्शविरोधित्वमेव सामान्यलक्षणं यत्र बाधप्रतिरोधासिद्धयो दोषा न तु व्यभिचारविरोधौ ह्रदो वह्निमान् धूमात् काञ्चनमयह्र
दो वह्निमान् धूमाद्ध्रदः काञ्चनमयवह्निमान् [illegible]माद्ध्रदो वह्निमान् काञ्चनमयधूमादित्यादौ तत्र विशिष्टपक्षे विशिष्टसाध्यसाधनयोर्वैशिष्ट्यावगाहिपदज्ञानं तद्विरोधित्वमेव तथा ए
वं यत्र व्यभिचारासिद्धी एव दोषौ काञ्च[illegible]यः पर्वतो धूमवान् वह्नेरित्यादौ तत्र विशिष्टपक्षविषयकव्याप्तिविशिष्टसाधनग्रहविरोधित्वादिकं तथैवानुध्येयम्। तद्धर्मावच्छिन्नभि
न्नत्वरूपलक्षणघटक[illegible] तया हेत्वाभाससामान्येतरभेदानुमापकत्वेऽपि व्यभिचारावारकतया तदितरांशस्य वैयर्थ्यमित्यत आह। स चेति। स चान्योन्याभावः
तिरिक्त एवेति योजना[illegible] तद्धर्मावा[illegible]च्छिन्नभेदत्वकूटावच्छिन्नप्रतियोगिताकश्चातिरिक्तः तत्तद्धर्मातिरिक्तः तथा च धर्मिभेदान्नैव व्यर्थ्यं तत्तद्धर्मावच्छिन्नभेदमात्रावच्छिन्न
प्रतियोगिताकान्योन्या[illegible]वस्य प्रतियोगितावच्छेदकीभूतभेदप्रतियोगितावच्छेदकतत्तद्धर्मस्वरूपत्वेऽपि तादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्मेषु कः॥

सा॰ ल्पनापेक्षयानावृष्टिशिष्टस्य च सनिपादस्य लाघवेन कल्पयितुं युक्तत्वादित्यभिप्रायः एतच्च यथाश्रुताभिप्रायेण तद्धर्मावच्छिन्ननिरूपितविषयितान्यतमविषयितानिरूपकतावच्छे
१६ दकधर्मवत्त्वस्य लक्षणत्वेऽधिकाशिकाशतकविशेषणसार्थक्यमित्यवधेयम् ननु साध्यादिभेदेन लक्षणभेदे द्रव्यं वह्निमानित्यादिस्थलीयलक्षणस्य पंचहेत्वाभाससाधारण्यसंभ
वात् तादृशलक्षणाक्रान्तानां पंचविधत्वानुपपत्तिरित्यत आह एवंविधगौरवाभावात्त्विति पंचविधत्वोक्तिरित्यर्थः तत्संभवस्थल इति यत्र पंचानामेव हेत्वाभासानां संभवो गौरवः घट
त्वादित्यादौ नत्स्थलीयलक्षणाक्रान्तस्य पंचविधत्वाभिप्रायेणेत्यर्थः नन्वेवं लक्षणाननुगमादितरभेदानुमाने भागासिद्धिरित्यत आह व्यभिचारादेरित्यादि साध्यादिभेदनियंत्रि
तत्वात् साध्यादिभेदनियंत्रितलक्ष्यतावच्छेदकत्वात् तथा च लक्षणस्य च लक्ष्यतावच्छेदकस्याप्यननुगमान्न भागासिद्धिरिति भावः नन्वेवमनुगतोक्त्यसंभवात् नायं प्रका
रः साधीयानित्यत आह शब्दाभेदस्येति इदं पुनरिहावधेयं तावदन्यान्यतमत्वमितरभेदानुमापकमेव न तु दोषपदप्रवृत्तिनिमित्तं तथा सति निर्वह्नित्वविशिष्टवह्नेः साधने धूमो
दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभावविशिष्टनिर्वह्नित्वावच्छिन्नान्यतमवदर्थकतया निर्वह्नित्वविशिष्टवह्निसाधने इत्यादेरनन्वितार्थकत्वप्रसंगात् अनुमिति असिद्ध्यातस्य
हेत्वन्वयिनि निर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमित्यभावप्रयोजकत्वाद्यर्थकत्वासंभवात् किंत्वभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकवत्त्वमेव तथा उक्तस्थले च प्रकारताप्र
कारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता चोभयमेव साधनपदार्थः प्रकारतारूपतदर्थः परवदर्थैकदेशव्याप्तिप्रकारतानिरूपकप्रकारतायां च षष्ठ्यु
तवह्निपदप्रतिपाद्यस्य वह्निनिष्ठत्वस्य स्वरूपसंबंधेन साधनपदार्थप्रकारताद्वयेऽस्मत्सम्यं तार्थस्य निर्वह्नित्वादिविशिष्टविशेष्यतायाश्च निरूपितत्वसंबंधेनान्वयः साधनपदो
त्तरसप्तम्या निरूपकत्वं द्वित्वं चार्थः निरूपकत्वं निरुक्तसाधनपदार्थयोः पृथगन्वयः तदन्वितनिरूपकत्वे च द्वित्वान्वयः द्वित्वान्वयि तादृशनिरूपकत्वयोर्दोषपदार्थघटका
भावेन्वयः तथा च निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निनिष्ठप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपितायाः वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपि
तधूमत्वावच्छिन्नप्रकारतातन्निरूपकत्वस्य द्वयोरभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकवानित्येवान्वयबोधः प्रतिबंधकीभूतभ्रमविषयितानिरूपकाभावमात्रोय
पर्वतेवह्निसाधने धूमो दुष्ट इत्यादिप्रयोगवारणाय विषयिताया भ्रमान्यवृत्तित्वं निवेशितं दोषघटककेवलसाध्यादौ दोषव्यवहाराभावात् अत्रायं दोष इत्यादौ स्वविषयकनि
श्चयान्यवहितोत्तरानुमितिनिष्ठतादृशोभयाभावाधिकरणतात्वव्यापकविरोधिविषयितानाप्रयोज्यताकधर्म एव दोषपदार्थ इति दिक्। असाधारण्यस्य पक्षवृत्तित्वे सति साध्यव्या
पकीभूताभावप्रतियोगित्वात्मकस्य सत्प्रतिपक्षस्य च पक्षनिष्ठसाध्याभावव्याप्यवत्तारूपस्य बुद्धेर्विरोधिविषयकतया साध्यवत्ताज्ञानप्रतिबंधकत्वं निर्विवादमेव एवं च तज्ज्ञा
नदशायां हेतोरनुमितिस्वजनकतयात दुष्टः प्रतिबंधकत्वमावश्यकमित्येतादृशयथाश्रुतार्थपरस्य दशाविशेष इत्यादिमूलस्यानुपपत्तिरन्यथासाधारण्यादिज्ञानप्रतिबंधक

ताया अपि व्यवस्थापयितुमुचितत्वात् अतस्तादृशमूलमन्यथा व्याख्यातुमवतारिणिकामाह। स्यादेतदिति इत्यत्रासाधारण्येतत्स्थलीयासाधारण्यरूपदोषप्रकारकहेतु
विशेष्यकभ्रमविषये सर्वसाध्यवद्व्यावृत्तत्वात्मके अव्याप्तिरिति तद्विषयकत्वस्य निरुक्तानुमित्यप्रतिबंधकहेत्वविषयकज्ञानसाधारणतया तादृशप्रतिबंधकतातिरिक्तवृ
त्तित्वादिति भावः ननु केवलं सर्वसाध्यवद्व्यावृत्तत्वं न दोषः अपितु साधनवृत्तित्वविशिष्टतादृशविशिष्ट विषयकत्वं तु न प्रतिबंधकतातिरिक्तवृत्तीत्यत आह सर्वेति तत्रेहे
तावसत्त्वात् अवृत्तेः साध्यवतिपक्षे हेतोर्वृत्तेरिति शेषः तथा च तादृशविशिष्टस्याप्रसिद्ध्या तस्य दोषत्वासंभवेन प्रसिद्धस्य अविशिष्टसाध्य व्यावृत्तत्वस्यैव तत्र दोषतया
आवश्यकत्वादिति भावः अद्रव्यद्रव्यत्वादाविति असमवेतद्रव्यत्वादावित्यर्थः असमवेतत्वस्य ध्वंससाधारणतया नित्यत्वाव्याप्यत्वासंभवाद्विशेष्यांशनिवेशः अप्यनं
तरं अव्याप्तिरित्यनुषज्यते तद्विषयकत्वस्य पक्षाविषयकज्ञानसाधारणतया प्रतिबंधकतातिरिक्तवृत्त्येव आह पक्षस्येति तथा च पक्षघटितविशिष्टाप्रसिध्या पक्षाघटि
तस्यैव दोषत्वमावश्यकमिति भावः तयोस्तादृशस्थलीयदोषत्वेनाभिमतयोरुक्तधर्मयोः शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वादिविशेष्यकनित्यत्ववद्व्यावृत्तत्वादिज्ञानवि
षये व्याप्तिः शंकानास्पदत्वाद्लक्ष्यताभ्युपगमेन तत्परिहारस्य चात्यन्तासंभवदुक्तत्वात् हेतुपदेसद्धेतुपरतया व्याचष्टे हेत्वोरिति सद्धेत्वोः साध्यवद्व्यावृत्तत्वरूपासाधा
रण्यसाध्याभावव्याप्यवत्पक्षकत्वरूपसत्प्रतिपक्षत्वासंभवादसाधारणसत्प्रतिपक्षपदे न्यथा व्याचष्टे असाधारण इति तथा प्रकृते सत्प्रतिपक्षपदार्थः प्रकृतसद्धेत्वो
दुष्टतारूपाभासत्वयोगादाभासपदमन्यथा व्याचष्टे आभासत्वादितित द्धेत्वित्यत्रतत्सदस्य हेतुपरत्वं न संभवतीति सत्प्रतिपक्षस्थले प्रतिबंधकज्ञानस्य हेतुविषयकत्वा
नियमात् हेतुविषयकथनस्याप्रयोजकत्वात् बुद्धिपदस्यापि बुद्धिसामान्यपरत्वं न संभवति हेत्वादिमात्रविषयकज्ञानस्याप्रतिबंधकत्वादतस्तत्पदस्य हेतुपक्षोभयपरत
या बुद्धिपदस्य साध्यवद्व्यावृत्तत्वसाध्याभावव्याप्यवत्त्वावगाहिबुद्धिपरतया तद्बुद्धिपदं हेतुविषयकसाध्यवद्व्यावृत्तत्वबुद्धिपक्षविषयकसाध्याभावव्याप्यवत्ताबुद्धि
परत्वेन व्याचष्टे तद्बुद्धीरिति तयोर्लक्ष्यतालाभायैव हेत्वोरित्यनंतरं श्रुत एवकारो त्रयोजनीयस्तदर्थमंतर्भाव्य व्याचष्टे प्रतिबंधकत्वपरमायातीति परं केवलं अवधारणव्य
वच्छेद्यं स्पष्टयति नत्विति तद्विषयस्य तादृशबुद्धिविषयस्य दोषत्वे दोषलक्षणलक्ष्यत्वे असत्त्वात् लक्षताप्रयोजकरूपस्यासत्त्वात् प्रतिबंधकीभूतज्ञानप्रमात्वस्यैव तद्वि
षयस्य लक्ष्यताप्रयोजकत्वादिति भावः असत्वादि विशिष्टस्याप्रसिद्धत्वादिति नार्थः एकदेशे एकव्याप्तेराशंकिततया विशिष्टाप्रसिद्धेस्तद्लक्ष्यतानिर्वाहकत्वविरहेणानु
पयोगादन्यथा प्रतिबंधकीभूतभ्रमविषयस्यापि दोषत्वे बाधभ्रमेण पक्षे साध्याभावभ्रमेण तस्य भ्रमविषयसाध्याभावादिः नन्वेवमुक्तस्थले प्राचां दशाविशेषे हेतोर्दुष्टताप्र
वादो नोपपद्यत इत्यत आह। निर्युक्तिकस्त्विति उपदर्शितस्थलेपि दशाविशेषे हेतोर्दुष्टतानंगीकुर्वःतत्साधारण्यापलक्षणमन्यथा व्याचष्टे यत्तन्मतमुपन्यस्यति। यत्विति

ज्ञानस्येतिषष्ठ्यंतार्थस्यपरत्वदार्थेन्वयः।तथाचज्ञानसंबंधित्वंविशिष्टंयद्रूपावच्छिन्नं यत्किंचित्संबंधेनानुमितिप्रतिबंधकतावच्छेदकमित्यर्थः।अत्राप्यवच्छेदकत्वमनतिरिक्तवृत्ति
त्वंउक्तयुक्तेस्तत्पदमुभयत्रतद्रूपावच्छिन्नपरंलक्षणार्थःव्युत्क्रमेणलक्षणयोरर्थः।नन्वेतावतैवकथंदर्शितसत्प्रतिपक्षादौलक्षणसमन्वयः।तत्रप्रतिबंधकतावच्छेदकीभूत
विशिष्टविषयकत्वस्याप्रसिद्धेः कथंवाव्यभिचारादिकमादायसव्यभिचारादावेवलक्षणगमनंव्यभिचारादिविषयकत्वस्यैवप्रतिबंधकतावच्छेदकतयाव्यभिचारादेरतथा
त्वादित्यतआह।तच्चेति।तादृशप्रतिबंधकतावच्छेदकंचेत्यर्थः।भ्रमात्मकबाधनि[illegible]तायासद्धेतोर्दुष्टतायाअसंभवंस्फुटीकर्तुमाह।बाधेचेति।बाधज्ञान
निष्ठप्रतिबंधकतायांचेत्यर्थः अवच्छेदकइतिशेषः।पक्षस्यवास्तवसाध्याभावव[illegible]ज्ञानकमितिसूचयितुं।प्रमितेति।विषयस्यावच्छेदकत्वेयुक्तिमाह।तद्विष
यकत्वेनेति।तथाचविषयविषयकत्वस्यैवविषयस्यापिविषयितयावच्छेदकत्वम[illegible]धिसामग्रीकत्वादिति।विरोधिकोट्यनुमितिसामग्रीकालीनत्वनपराम
र्शादेःप्रतिबंधकत्वमित्यभिमानः।तथाचतदादायैवसत्प्रतिपक्षिते साधारणेचसद्धे[illegible]विशेषेदुष्टत्वमितिभावः। ननुज्ञाननिष्ठविरोधिसामग्रीकालीनत्वमादायक
थंहेतोर्दुष्टत्वंतस्यज्ञानएवसत्वादित्याशंकांपरिहरति तद्धत्वंचेति।तद्विषयकहेतोरपीति तत्कालनिरूपिताधेयतात्मकस्यतत्कालीनत्वस्याधेयभेदेनभेदानभ्युपगमा
दभ्युपगमेचाधेयतासंबंधेनतत्कालस्यावच्छेदकतयातमादायैवलक्षणसमन्वयादितिभावः।।नाभेदेनेति।विवक्षितुंशक्यमितिशेषः साध्याभाववद्वृत्तित्वादिविशिष्टसा
धनरूपदोषस्याभेदसंबंधेनहेतौसत्वान्नतेनसंबंधेनतद्वत्वविवक्षापाअप्रसक्तिःबाधेतदभावादिति। वन्ह्यभाववद्ध्रदादिरूपबाधेधूमादिहेत्वभेदासत्वादित्यर्थः।तथा
चतत्राव्याप्तिरितिभावः। अतएवबाधितेअव्याप्तेरेव। नाश्रयतयातद्वत्वविवक्षार्हमितिशेषः धूमादेर्वन्ह्यभाववद्ध्रदादिनाश्रयत्वादेकज्ञानविषयत्वादिरूपसंबंधस्य
चाधारत्वानिर्वाहकत्वा दितिभावः।अव्याप्तिमुक्त्वातिव्याप्तिमप्याह वन्हिव्यभिचारीति।।ननुसाध्याभाववद्वृत्तित्वादिरूपविषयएवप्रतिबंधकतावच्छेद
कोनतुतत्तद्विशिष्टद्रव्यत्वादितदाश्रयश्चनधूमादिरित्याशंकांनिराकरोति। साध्याभाववदिति।साध्याभाववद्वृत्तिहेतौ ज्ञानस्येति।तादृशहेतुविषयकज्ञानस्येत्यर्थः।
तथाचवन्ह्यभाववद्वृत्तित्वादिविशिष्टद्रव्यत्वादिकमपिविषयितयावच्छेदकमेवेतिभावः। ननुधूमादेस्तादृशधर्मवत्वेपिवन्हौसाध्येधूमोदुष्टइत्यादिव्यवहारस्यना
पतिसंभवः उक्तयुक्त्यातद्धेतुकानुमितिविरोधिरूपवत्वस्यैवतत्रदुष्टताव्यवहारनियामकत्वात्‌।अन्यथातवाप्यप्रतीकारादित्यतो न्यत्रातिप्रसंगमाह।साधारण्यादि
विषयकत्वस्यचेति। ज्ञाननिष्ठस्यज्ञानवृत्तित्वविशिष्टस्य।सत्वादीतिसत्तावान्‌ ज्ञानादित्यादौज्ञानहेतुकसत्ताद्यनुमितिप्रतिबंधकतावच्छेदकंज्ञानांशेसत्वाभाववद्वृत्तित्वा
वगाहित्वमादायसत्वेसाध्येज्ञानंदुष्टमित्यादिव्यवहारापत्तेरित्यर्थः। येनकेनापिसंबंधेनतद्वृत्तित्वविवक्षणीयमित्यपिदूषयति। यथाकथंचिदिति।अतिप्रसंजकत्वादिति

उक्तधर्ममादायसत्त्वादिसाध्यके ज्ञाने धूमाद्यंशे पद्व न्ह्यभाववह्नित्वाद्यवगाहित्वएकज्ञानविषयत्वादिसम्बन्धेन तद्धत्त्वमादाय वह्न्यादिसाध्यकेधूमादावपिदुष्टत्व-
व्यवहारापत्तेरित्यर्थः।सत्प्रतिपक्षादिस्थले विरोधिसामग्रीकालीनत्वेन प्रतिबन्धकतामादाय लक्षणसत्त्वमुपपादितं तत् दूषयति। विरोधिसामग्रीति। नस्वसाध्यानुमितिप्र-
तिबन्धकइति। नस्वजन्यानुमितिप्रतिबन्धक इत्यर्थः। कारणत्वप्रतिबंधकत्वयोरेकत्रानभ्युपगमादितिहृदयं। विभिन्नरूपेणतदुभयस्यैकत्रोपगमेप्रतिबन्दीसूचनाय
हमणीति नप्रतिबन्धकइत्यनुषज्यते तथाच विरोधिकोऽप्यनुमितिसामग्रीकालीनत्वेन परामर्शादीनामनुमितिप्रतिबन्धकत्वेमणिसमवहितत्वेन वह्न्यादीनामपिदा-
हप्रतिबन्धत्वापत्तिः। मणिसमवहितत्वापेक्षयालाघवान्न मणित्वेनैवप्रतिबंधकताकल्प्यते इति चेत् तर्हि विरोधिसामग्रीकालीनत्वापेक्षयालाघवात् तादृशसामग्रीत्वे-
नविरोधिपरामर्शत्वेनैववाप्रतिबन्धकत्वं प्रकृते कल्पयितुमुचितमितिकथंविरोधिसामग्रीकालीनत्वमादायलक्षणंसंगमनीयं तस्यप्रतिबंधकतातिरिक्तवृत्तित्वमितिभा-
वः। कार्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपप्रतिबन्धकतावच्छेदकत्वमेवविवक्षितम्। ननुकारणीभूताभावप्रतियोगितावच्छेदकत्वरूपंतच्च विरोधिसामग्रीकालीन-
त्वेप्यक्षतमेवेत्याह। अथेत्यादिना। यद्धर्मेतियादृशधर्मविशिष्टनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकोनुमित्यनुत्पादस्तादृशरूपमेवेत्यर्थः। निश्चयत्वनिवेशाद्वाधादिवि-
षयकसंशयसंस्काराद्यव्यवहितोत्तरक्षणे कदाचिदनुमित्युत्पादेपिनक्षतिः। अत्रएतल्लक्षणेप्रतिबंधकतावच्छेदकमुक्तप्रतिबंधकतावच्छेदकपदेनविवक्षितं। भवतीति
चेति विरोधिकोनुमितिसामग्र्याः प्रतिबन्धकत्वकथनंप्रतिबंधकसमवहिताव्यवहितोत्तरक्षणे कार्यानुत्पादस्यावश्यकतयाविरोधिसामग्रीकालीनत्वस्यनिरुक्तप्रतिब-
न्धकतावच्छेदकतायाआवश्यकत्वप्रदर्शनाय। तथाआवश्यमनुमित्यनुत्पादः विरोधिसामग्र्याः प्रतिबन्धकत्वेयदुक्तं तदेवादौ दूषयति न चेति नहीत्यर्थः॥कालादीति॥
घटितेत्यंतहेतुगर्भविशे[illegible]गतथाचकारणसमुदायः सामग्रीसाच क्वचिदपिनप्रतिबधि[illegible]कालादिसाधारणकारणानामपितदंतर्निविष्टत्वात्। तेषांचप्रतिबंधकतावच्छेदक-
कोटिनिवेशस्यनिष्फलत्वात्प्रतिबन्धकार्यपितेषामनुगुणत्वादित्यर्थः।सत्प्रतिपक्षस्थले[illegible]रोधिकोऽप्यनुमितिसामग्र्यास्तत्कोऽप्यनुमितिप्रतिबंधकत्वमस्यत्वासंभवदुक्ति-
कमेवतत्रफलानुसारेणसामग्र्याएवासत्त्वादित्याह। विशेषतस्त्वित्यादिना। अत्रसत्प्रति[illegible]पक्षस्थलेसामग्रीनप्रतिबंधिकेत्यनुषज्यते। तत्सत्त्वेसामग्रीसत्त्वेकार्यैत्पादस्यदुर्वा-
रत्वात्। सामग्र्याः कार्योत्पत्तिनियतत्वादितिभावः।ननुतर्हि तत्रपरामर्शादिरूपानुमितिहेतुसत्त्वादनुमितिः कथमेत्यतआह। किंत्विति। विरोधिपरामर्शः साध्याभावव्या-
प्यवत्तानिश्चयः। तथाअनुमितिप्रतिबंधकः। ननुयत्रवन्ह्यभावव्याप्यवत्तापरामर्शो वन्ह्यभावाभाववान्पक्षइतिबाधनिश्चयश्चवर्तते तत्रवन्हिव्याप्यवत्ताज्ञानेनवन्ह्य-
नुमितिर्जन्यते इत्यनुभवसिद्धं[illegible]रोधिपरामर्शमात्रस्यप्रतिबंधकत्वेच तन्नोपपद्यतइत्यतआह। यदिचेति॥ तत्सत्त्वेपिविरोधिपरामर्शसत्त्वेपितत्साध्यबाधावतरे ताद-

सा० प्रपरामर्शानुमेयविरोधिकोटिः पक्षः भावानश्चयदशाया। नानुमितिप्रतिबंधः। न प्रकृतसाध्यानुमित्यनुत्पादः। अप्रामाण्यग्रहाभावस्येत्यनंतरं वैशिष्ट्य मित्यनुषज्यते॥ तद्
१८ भावस्य विरोधिकोटिविरहनिश्चयाभावस्य तत्र विरोधि परामर्शस्य प्रतिबंधकतावच्छेदकगर्भे निवेश्यता मिति अत्र विपरीतकोटिव्याप्यवत्तापरामर्शदशायां तत्कोटि
विरहनिश्चयसत्वे सत्परामर्शे भ्रमत्वग्रहानंतरमेवानुमितिः स्वीक्रियते न तु अन्यथेति भ्रमत्वग्रहाभाववैशिष्ट्य वैशिष्ट्यनिवेशे नैवोपपत्तौ तादृशबाधग्रहाभाव वैशिष्ट्य
निवेशो व्यर्थ इत्यनिसरसूचनाय यदि चेत्युक्तं। अप्रामाण्यग्रहाभाववैशिष्ट्यस्य दृष्ट[illegible]तिबंधकतावच्छेदकत्वं च दर्शितं नन्वस्त्वनुमितिविरोधिपरामर्शमात्रे प्र
तिबंधकं तथापि न घटितविरोधिसामग्रीकालीनज्ञानस्य फलानुसारात् नियतत्वात् [illegible]ग्रीकालीनत्वस्य निरुक्तप्रतिबंधकतावच्छेदकत्वं दुरूपवादमेव। एवं च तथा
विधविरोधिपरामर्शकालीनत्वमादायापि दृशाविशेषे सत्प्रतिपक्षितस्य हेतोर्दुष्टत्वमुप[illegible]तो विरोधिपरामर्शादिकालीनत्वसमशीलबाधादिभ्रमकालीनत्वमादाय सद्धे
तावतिप्रसंगमाह। तथा चेति तथाविधेति भ्रमप्रमासाधारणेत्यर्थः। अपीत्यनंत[illegible]नुमि[illegible]त्यनुषज्यते तथा च तादृशबाधादिग्रहकालीनमपि निरुक्तप्रतिबंधकतावच्छेद
कत्ववद्भवत्येवेति भावः। दूतीदूत्यतः अतिप्रसंग इति। बाधादेरनित्यदोषतायाः कनाप्यनभ्युपगमे नेष्टापत्त्यनवकाशादिति भावः विरोधिपरामर्शकालीनत्वमादाय सर्वत्र
सत्प्रतिपक्षिते दुष्टत्वं नोपपादयितुं शक्यत इत्याह। न चेति नहीत्यर्थः। अतीतादेरिति। तथा चातीतादिसद्धेतौ विरोधिपरामर्शदशायां भवन्मतसिद्धसत्प्रतिपक्षितत्वे नोपपद्य
त इति भावः। सत्प्रतिपक्षिते सद्धेतौ विरोधिव्याप्यवत्पक्षाप्रसिद्धावपि प्रतिबंधकीभूतभ्रमविषयप्रसिद्धविरोधिव्याप्त्यादिरेव दोष इति मतं दूषयति। यदपीति। यद्विषयकत्वेने
तितृतीयार्थः स्वरूपसंबंधरूपावच्छेदकत्वं न तु अनतिरिक्तत्वरूपं तथा सति विरोधिव्याप्यादेर्दोषत्वानुपपत्तेः। प्रतिबंधकतायां ज्ञाननिष्ठत्वविशेषणं कामिनीजिज्ञासादिनि
ष्ठप्रतिबंधकतावच्छेदकधर्मे अतिप्रसंगवारणाय। ननु विरोधिकोटिव्याप्यत्वस्य पर्वतो वन्हिमान्धूमात् पर्वतो न वन्हिमान् जलत्वादित्यादौ प्रतिबंधकीभूतज्ञानविषयस्म
वायादिसंबंधावच्छिन्नपक्षधर्मतायाश्च प्रकृतहेतावभावात्कथं तस्य दुष्टत्वमत आह तद्धेत्वमपीति। विरोधिव्याप्त्यादिमत्वमपीत्यर्थः तज्ज्ञानरूपेणेति। विषयकज्ञान
विषयत्वात्मकेनेत्यर्थः संबंधविशेषस्याविवक्षितत्वादिति भावः। तादृशसंबंधवत्तां प्रकृतहेतौ उपपादयति तस्येति। विरोधिव्याप्त्यादिज्ञानस्येत्यर्थः। समूहालंबनत्वे इति।
न चैवं क्रमिकपरामर्शद्वयस्थले सत्प्रतिपक्षितत्वानुपपत्तिरिति वाच्यं। तत्रापि तादृशव्याप्त्यादिप्रकारकप्रस्तुतहेतुविषयकेश्वरज्ञानादिकमादाय तद्धेत्वोपपत्तेः साध्याभाव
वत्पक्षविषयकत्वेन साध्याभावप्रकारेण पक्षावगाहित्वेन साध्याभाववत्पक्षज्ञानेति। साध्याभावप्रकारकपक्षज्ञानांशे प्रमात्वविषयकत्वेनेत्यर्थः मतभेदेन विकल्पः। तस्य ता
दृशज्ञानस्य साध्यवत्यपि पक्षे साध्यवत्यपि सति। अतिव्याप्तेरिति पर्वतो वन्हिमान्धूमादित्यादौ भ्रमात्मकबाधादिज्ञाननिष्ठप्रतिबंधकतावच्छेदकविषयितानिरूपकवत्त्वभा

वादेः स्वविषयकज्ञानविषयत्वादिसंबंधेन वैशिष्ट्यस्य हेतौ सत्वादिति भावः। इदमुपलक्षणं। वन्हिमान्धूमादित्यादौ भ्रमात्मकविरोधिपरामर्शशून्यकालेपि तद्विषयविरोधिव्या-
प्यादिकमादायापि हेतोर्दुष्टत्वप्रसंगो बोध्यः। तदापि पक्षांशे तद्विशिष्टविशेषणकसमूहालंबनज्ञानसंबंधेन हेतौ तद्वैशिष्ट्यसंभवात्। अनतिरिक्तवृत्तित्वरूपमेवावच्छेदकत्वं विव-
क्षणीयमित्यभिप्रायेण बाधभ्रमप्रतिबंधकतामादाया तिप्रसंगस्योद्धारमाशंकते विशिष्टेति साध्याभावविशिष्टपक्षविषयकत्वमेव प्रतिबंधकतानतिरिक्तवृत्ति न तु साध्या-
भावमात्राविषयकत्वमित्यर्थः विशिष्टं च साध्याभावविशिष्टपक्षश्च। तत्र बाधस्थले सर्वत्र तादृशवैशिष्ट्यं सिद्धमेवेत्यभिमानः। भ्रमं निराकरोति। तत्किमिति। पक्षावृत्तिसाध्य-
कसत्प्रतिपक्षे साध्याभावव्याप्य विशिष्टपक्षस्याप्रसिद्धत्वात्। सर्वत्रेति। सत्प्रतिपक्षतया भवन्मतसिद्धेः प्रसिद्ध इति तथा चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वं विव-
क्षितुमशक्यमिति दर्शितातिव्याप्तिर्दुर्वारैवेति भावः। तद्धेतुत्वघटकसंबंधविवक्षापि दूषयति यथाकथंचिदिति। अतिप्रसक्तं सद्धेतुसाधारणं तथा च पर्वतादेर्वन्ह्यादिमत्वे साध्ये धू-
मादेर्दुष्टताव्यवहारापत्तिरिति भावः। तादृशसंबंधेन तद्धेतुत्वस्य धूमादिरूपसद्धेतुसाधारणत्वं स्फुटयति धूमादेरिति ज्ञानरूपेण स्वविषयत्वेन तदाश्रयत्वादिना आदि-
नाएककालीनत्वादिपरिग्रहः॥ व्यभिचारादिसत्वात् वन्ह्यभाववद्वृत्तित्वादि सत्वात्। ननु यादृशसंबंधावच्छिन्नय त्प्रकारतानिरूपितधर्मिविशेष्यताशालित्वेन
ज्ञानस्य प्रतिबंधकत्वं तेन संबंधेन तद्धत्त्वमेव दुष्टत्वं वाच्यं। एवं च स्वरूपादिसंबंधावच्छिन्नसाध्याभाववद्वृत्तित्वादिप्रकारतानिरूपितहेतुविशेष्यताशालित्वे नैव व्यभिचारा-
दिज्ञानस्य प्रतिबंधकतया तेन संबंधेन तद्धत्त्वस्य च प्रकृतहेतावभावात् नातिव्याप्तिरित्याशंकां निराकुरुते यादृशेति। सर्वत्र सत्प्रतिपक्ष इति ह्रदो वन्हिमान् धूमवत इत्यादि-
स्थले धूमवद्ध्रदादिरूपहेतौ व्याप्यताघटकसंबंधेन वन्ह्याद्यभावव्याप्यवत्ताया असत्वादिति भावः। ह्रदो वन्हिमान् धूमादित्यादौ धूमादिरूपहेतौ व्याप्यताघटकसमवाया-
दिसंबंधेन वन्ह्याद्यभावव्याप्यधूमत्वादिमत्तायाः सत्वात्। सर्वत्रेत्युक्तं। क्वचित्स द्धेताविति। सद्धेतुदशायामपि क्वचिदित्यर्थः। पर्वतो वन्हिमान् धूमादित्यादौ विरोधिपराम-
र्शासमवधानदशायामपि प्रतिबंधकतावच्छेदकप्रकारताश्रयवन्ह्यभाववन्हिमदन्यत्वव्याप्यादेस्तादृशप्रकारतावच्छेदकस्वरूपादिसंबंधेन धूमादिवृत्तित्वादिति भावः। यत्तु
ज्ञानसंबंधेन तद्धत्त्वमेव दुष्टत्वं। ज्ञानं च विशिष्टव्यवहाराद्यनुरोधात् क्वचिदेव कदाचिदेव कस्यचित्संबंधः। एवं च विरोधिव्याप्यादेर्ज्ञानविरोधिपरामर्शदशायामेव प्रकृतहेतौ तत्सं-
बंधस्तदैव तत्र दुष्टताव्यवहारात् साध्याभावादेर्ज्ञानं तु न तत्र कदाचिदपि तथा परमेश्वरादिसाधारणं साध्याभावविशिष्टपक्षादेर्ज्ञानं तु तत्र सर्वदैवेति। न तु हासास्पदमेव सकलाभियुक्त-
पुरुषसाधारणस्य नियतव्यवहारस्यासिद्धत्वात् वासनाविशेषवतां तादृशव्यवहारस्य विपरीतस्यापि संभवात्। ज्ञानस्य नियतसंबंधत्वासाधकत्वादिति। बाधसत्प्रतिपक्षज्ञानयोः प्र-
त्यक्षशाब्दज्ञानप्रतिबंधकत्वमादाय बाधसत्प्रतिपक्षयोरनुमितिमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयाभावप्रतियोगिज्ञानविषयत्वरूपे लिंगासाधारणदोषत्वं न

सा० १९

संभवतीत्याक्षिप्तमणिकृतातादृशप्रतिबंधकतायां च युक्तिर्नोक्तेति न्यूनतापरिहाराय तत्र युक्तिमाह स्थाणुत्वाभावस्येति। स्थाणुत्वप्रत्यक्षशाब्दयोरिति समानधर्मितावच्छेदकस्य स्थाणुत्वप्रकारकस्य लौकिकसन्निकर्षोद्यन्यप्रत्यक्षस्य शाब्दस्य चेत्यर्थः। एवं शाब्दबुद्धौ बाधतदभावव्याप्यवत्ताज्ञानयोः प्रतिबंधकत्वेन शिरः कपालमिति नरशिरःकपाले शुचित्वानुमापके तद्धर्मिकप्रामाण्यग्रहपरामर्शेन स्वतःफलद्वारावागमन[illegible] शौचबोधविरोधः स्यादि[illegible] सच्चानुभवविरुद्धः तत्रप्रामाण्यग्रहज्ञानदशायामपि शाब्दाशौचज्ञानस्यानुभवसिद्धत्वादिति भावः समाधत्ते तत्रेति। तादृशौ चज्ञानप्राक्काल इत्यर्थः। अ[illegible]कूलतर्कभा[illegible]व्याप्तिनिश्चयस्य बलवत्तरागमविरोधेनानुमितेश्च नसदिति योजना। एवं च वास्तवव्याप्यधर्मस्य येन केनापि रूपेण ज्ञानमेव न विरोधि अपि तु व्याप्यत्वे[illegible]ण्यंगत्वस्य ज्ञानेपि व्याप्तिग्राहकतर्कविरहेण व्यभिचारशंकया शौचव्याप्यत्वेन तज्ज्ञानसंभवतीति कारणान्तरविरहेण यत्र व्यभिचारशंकाविरहः तत्र कथं चित्[illegible]हेपि गृहीतप्रामाण्यकागमतात्पर्यविषयविपरीतविषयकत्वेन तत्राप्रामाण्यं गृह्यते तथा च तादृशप्रामाण्यं गत्वज्ञानेन शौचानुमितिजनने शाब्दाशौचज्ञानप्रतिबंधे[illegible]प्रभवतीति समुदायार्थः आगमे प्रामाण्यग्रहश्च विशिष्टपरिग्रहादिनैव भवति यावन्न तादृशपरामर्शेनाप्रामाण्यं गृह्यते तावन्न भवत्येवागमप्रवृत्तिरिति भावः यद्वेत्यादिग्रंथेन बाधादिज्ञानस्यानुमित्य[illegible] तिरिक्तज्ञानाप्रतिबंधकत्वव्यवस्थापनबाधादेर्लिंगासाधारणदोषत्वमेवोपपादितं। तन्न संगच्छते बाधितार्थस्य शाब्दाभ्युपगमेऽनुमितेरप्यनपवादात् तत्राप्यप्रामाण्यग्राहकतया बाधादिग्रहस्य प्रवृत्त्यादिविरोधितोपपत्तेरित्यत्र कल्पे ग्रन्थकृतोऽनिर्भरमाह यद्वेत्यादीति। ननु आनुमानिकबाधादिदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षोत्पत्तिबाधनिश्चयसामान्यस्य प्रत्यक्षप्रतिबंधकत्वं न संभवतीति अनुमित्यसाधारणप्रतिबंधकत्वं बाधनिश्चयत्वावच्छिन्नस्यास्त तमतो यद्विषयकनिश्चयत्वेन अनुमित्यसाधारणप्रतिबंधकत्वं तच्चलुस्यताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधलक्ष्यतोपपादकत्वं सुष्टु संगच्छत इत्यत आह प्रत्यक्षप्रतीति समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षस्यापि अनुत्पत्तेरानुमानिकेति निश्चयविशेषणं शाब्दप्रतीति तथा च तावतैव लिंगासाधारणदोषत्वव्याघात इति भावः। तत्रापि तदप्रतिबंधकत्वमाशंकते। योग्यतेति अन्यथासिद्धत्वादिति बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दज्ञानानुत्पादादिति भावः तदभावः बाधादिनिश्चयाभावः तत्र शाब्दबुद्धौ यद्यपि योग्यबाधसंशयद्वितीयक्षणे स्मरणाद्यात्मकायोग्यतानिश्चये सति द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्य आवश्यकत्वं तथापि बाधादिज्ञानस्य शाब्दाप्रतिबंधकत्वेपि निर्विवादोपनीतभानविशेषप्रतिबंधकतयैव बाधादेर्लिंगासाधारणदोषत्वनिराकरणसंभवात् तत्रैव त[illegible]न्निराकरोति एवमपीति उपनीतभानविशेषदोषविशेषाजन्योपनीतभानत्वेन बाधनिश्चयाद्यभावत्वेन दुर्वारत्वादिति बाधादिति निश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्वानुभवसिद्धत्वादिति भावः॥ ॥ इति श्रीगदाधरकृतासामान्यनिरुक्तिः॥

गा० १

॥समाप्ता॥ कान्यकुब्जवंशावतंसन्यायशास्त्राध्यापककुंजलालवाजपेयिनां सहाय्यमवलंब्य पंचलक्षण्यादिग्रंथाः —— काशीनाथशास्त्रिणा शोधिताः॥ वाराणसीप्रसादस्य नियोगेन तु यत्नतः॥ काशीसंस्कृतमुद्रायाम कितोयशिलाक्षरैः॥१॥ श्रीकाशीजी मे ज्ञानवापी के पूर्व फाटक पर श्री विश्वनाथजी के पास महाराज शिवलाल दुबे जी के मकान मे काशी संस्कृत मुद्रा यन्त्र मे छपी जिनको लेना होय उन्होने इस कार्य के संपादक बाबू वाराणसी प्रसाद या के चौरी गली मे भाई प्रतापसिंह जी के दुकान पर मिलैगी॥ ॥॥
मिति चैत्र कृष्ण २ गुरुवासरे संवत् १९३०॥

॥इतिगदाधरकृतासामान्यनिरुक्तिःसमाप्तिमगमत्॥ राम ॥